## शोधप्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य अनुसन्धान-प्रकाशन-विभागीया शोध-पत्रिका

- एषा त्रैमासिकी शोध-पत्रिका।
- अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविध-दृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- अस्यां श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीका-टिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- शोधपत्रलेखकाः शोधपत्रस्यान्ते पत्राचारसङ्केतः दूरभाषसंख्या, ईमेलसङ्केतश्चावश्यं लेखनीयाः।
- पत्रिकायाः एका प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशितशोध-सामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्णं दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- अस्या एकाङ्कस्य मूल्यम् रु. 125.00, वार्षिकसदस्यताराशिः रु. 500.00
- पञ्चवार्षिकसदस्यताराशिः रु. 2000.00, आजीवनसदस्यताराशिः रु. 5000.00
- सदस्यताराशिः **कुलसचिव, श्री लाल बहादुर शास्त्री राष्ट्रीय संस्कृत विश्वविद्यालय,** नई दिल्ली-16, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः **वा ई-बैंकमाध्यमेन देयः।**
- पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **'सम्पादक' शोध-प्रभा। श्री लाल बहादुर शास्त्री राष्ट्रीय संस्कृत विश्वविद्यालय (केन्द्रीय विश्वविद्यालय), कटवारिया सराय, नई दिल्ली-110016** इति सङ्केतेन विधेयः।

**-सम्पादकः**

# नैवेद्यम्

संस्कृतं नाम चैतन्याधायकं किमप्यपूर्वं वस्तु, जीवनस्पन्दनञ्चास्मत्संस्कृतेः मानवतायाश्च, तपश्चरणफलं पूर्वजानाम्, सर्वथा संरक्ष्यो दायादश्च भाग्योत्कर्षासादितः, सुकृतपरिपाकश्चास्माकम्। यच्च न केवलं सूतेऽचिन्त्यं महत्फलमपितु स्थापयत्याचारे, प्रयोजयति पुरुषार्थेषु च। यस्य संरक्षणेन, संवर्द्धनेन च परिस्फुरति श्रीः सर्वस्या अपि संसृतेः, विरुद्धानामपि समञ्जसं समन्वयनं यस्यानुपमं सौन्दर्यम्। इत्थमवसितेऽपि नूनं शिष्यते बहुविधेयमेतदीयम्, न केवलं स्तुत्या संभवत्यस्यालङ्करणमपितु सौरभविकिरणेन, कर्मतया परिणत्या च। न तोष्टव्यं केवलमाहितकर्मसम्पत्त्या, अपित्वेष्टव्यमार्षप्रज्ञा प्रसूतशास्त्रसंरक्षणम्।

अपूर्व एव महिमा शास्त्राणामाविर्भूततत्प्रकाशानां तेषां महर्षीणाम्। स्वशरीरं तृणाय मन्यमानैः तपःस्वाध्यायनिरतैर्यैर्महात्मभिः स्वानुभूतिमहिम्ना समधिगतं नित्यनिरवद्यं मातापितृसहस्रेभ्योऽपि वत्सलतरमतिसम्पन्नं शास्त्रजातमतिरिच्य किं वा स्यात्स्वकीयं स्वरूपावेदकं वा तत्त्वमिति बहुधा चिन्तयामि। महच्चित्रमिदं स्थाने न यथावन्निरूप्यते शास्त्रसम्पत्, नेदानीमपि पूर्णतया परीक्ष्यते व्युत्पत्तिपाटवं, न च प्रतीक्ष्यते शास्त्रानुगतत्वम्। इदमपि विस्मयकरं यन्न समाराध्यते कश्चिदपि ग्रन्थ आमूलमिति, नाधिगम्यते शास्त्रस्य व्यवस्थितं रूपं प्रतिपित्सितं वाञ्जसा। शास्त्राभिरुचिग्रहणे प्रतिबन्धकं भवति स्वरूप-संस्कारवैकल्यमन्तेवासिनाम्, स्वच्छदर्पण इवाविकलं प्रतिफलति गुरूणां प्रतिभा। शिष्यायोग्यताप्रमादनियमित आचार्यगतो ग्रन्थग्रन्थिविस्फोरणक्षमोऽपि प्रज्ञाप्रवाहो न मुक्तं विहरति शास्त्राङ्गणे।

इदमतिरोहितमेव विदुषां यदस्मद्विश्वविद्यालयः शास्त्रसंरक्षणदिशि कञ्चित्क्रमं प्रवर्तयन्निव सर्वदा बोभवतीति तद्विधावेवेयं **शोधप्रभा** स्वलक्ष्यमाकलय्यानुदिनं समेधमाना शास्त्रचैतन्यं विकिरन्ती समुल्लसति। तस्या एवाङ्कविशेषः सम्प्रति स्वाहितनिबन्धगौरवेन भवत्पाणिपल्लवपुटमुपेत्योत्स्मयमाना विलसति। अतः शोधप्रकाशनविभागाय धन्यवादं वितन्वन् पाठकानां शं समीहे।

**-प्रो. मुरलीमनोहरपाठकः**

कुलपतिः

# सम्पादकीयम्

विश्वस्य समेषां राष्ट्राणां भवति काचिद् गौरवभूता स्वकीया राष्ट्रभाषा, यस्यां विराजते राष्ट्रस्य माहात्म्यम्, राष्ट्रीया संस्कृतिः, राष्ट्रीया परम्परा, राष्ट्रीयचिन्तनञ्च। सर्वाण्यपि राष्ट्राणि स्वकीयया मातृभाषया नितान्तं स्निह्यन्ति। स्वभाषासम्भाषणे, स्वभाषालेखने, स्वभाषापठने पाठने च आत्मगौरवमाकलयन्ति। किमधिकं स्वभाषासंरक्षणाय आत्मानमपि समर्पयन्ति, परञ्च पश्चिमचिन्तनप्रभावादस्माकं देशे न दृश्यते तादृशं परिदृश्यं, न वा भारतीयानां यूनां विद्यते तादृक् भाषाप्रेम। ते तु केवलमर्थलाभाय यतन्ते, तदर्थं कापि भाषा भवेत्, कापि विद्या भवेत्, किमपि साधनं भवेत्, किमपि वा आचरणं भवेत् सर्वमौदार्येणोररीकुर्वन्ति। वस्तुतः विश्वऽस्मिन् विश्वे विकसितानि यानि खलु राष्ट्राणि तानि स्वकीयं साहित्यवैभवम्, स्वकीयं ज्ञानविज्ञानम्, स्वकीये संस्कृतिपरम्परे च स्वभाषया प्रकाशयन्ति। जर्मनदेशे जर्मनभाषया, फ्रांसदेशे फ्रेञ्चभाषया, जापानदेशे जापानीभाषया, चीनदेशे चीनीभाषया एवमेव अन्येष्वपि देशेषु स्वभाषया एव व्याख्यायते समग्रं साहित्यं, कलावैभवं, तकनीकिज्ञानविज्ञानञ्च। अत्र भारते न तथा, कियद्दौर्भाग्यमस्माकम्? समासां भाषाणां जननीभूता, विश्वैर्वन्दिता सती अस्माकं संस्कृतभाषा अस्माभिः नाद्रियते, नास्त्यस्माकं संस्कृतं प्रति समवेतश्रद्धा न वा हिन्दीभाषां प्रत्यैकमत्यम्, अपितु तत्तत्क्षेत्रीयाः तमिल-तेलगु-कन्नड-मलयालम-उडिया-बंग-असमिया-मणिपुरीप्रभृतयो भाषाः तत्तत्प्रान्त-जनैराद्रियन्ते। अतोऽपेक्ष्यते यदस्माकं देशस्यापि काचित् सर्वप्रान्तेषु स्वीकार्या भाषा भवेद्यया अस्माकं समग्रं प्राचीनतममाधुनिकञ्च भारतीयं ज्ञानविज्ञानं व्याख्यायितं भवेत्। अस्याः भावनायाः सम्पूर्तिः संस्कृतभाषया एव सम्भवति यतः संस्कृतं सर्वासां भारतीयभाषाणां जननी, अत्र निहितमनन्तं ज्ञानसम्पत्। विविधधर्म-सम्प्रदाय-भाषाभूषितस्य भारतस्य एकतायाः मूलकारणं संस्कृतमेव। संस्कृतं कस्याप्येकस्य प्रान्तस्य भाषा नास्त्यपितु समेषां प्रान्तानां समग्रस्य च राष्ट्रस्य भाषाऽस्ति। अनयैवानुभूयते अखण्डराष्ट्रैक्यबोधः। संस्कृतस्य राष्ट्रभाषारूपेण संस्थापनं यदि देशे भवेत्तर्हि विश्वस्मिन् विश्वे भाषादृष्ट्या फ्रान्स-जापान-चीनादिदेशवद् भारतस्यापि महत्त्वं नूनमभिवर्द्धेदिति चिन्तयामः।

विश्वविद्यालयानुदानायोगेन स्वीकृतासु सन्दर्भितशोधपत्रिकास्वन्यतमा श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविश्वविद्यालयस्य त्रैमासिकी शोधपत्रिका 'शोधप्रभा'। इयं विगतेभ्यः षट्चत्वारिंशद्वर्षेभ्यः नैरन्तर्येण मौलिकोत्कृष्टान्वेषणान्वितशोधपत्रप्रकाशनपरायणा अनुसन्धानक्षेत्रे विशिष्टं स्थानं बिभर्ति। पत्रिकेयं संस्कृतविदुषामनुसन्धित्सूनां छात्राणाञ्च चिन्तननिचयोन्मीलनाय अनुद्घाटित-ज्ञानवैभवस्योद्-घाटनाय महोपकारिकेति मे दृढीयान् विश्वासः।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः नवसंख्याकाः-शोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्च चिन्तनं विहितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसन्धातृणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति कामयमानोऽहं निकषधिषणापूरितविषयवस्तु-जातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् शास्त्रसमुपासकान् सुमनसो मनीषिणः।

**-प्रो. शिवशङ्करमिश्रः**
शोधविभागाध्यक्षः

# विषयानुक्रमः

## संस्कृतविभागः



## हिन्दी विभाग



## English Section





# शोधकर्मणि नैतिकताप्रसङ्गः

**श्रीतरुणचौधुरी***

शोधो नाम परमार्थतः सत्यानुसन्धानम्। नवनवतथ्यैः नवीनसत्योद्घाटनमेव गवेषणम्। गवेषणकर्मणि सत्यस्योपस्थापनमेव साध्यत्वेन गण्यते। शास्त्रेषु सत्यस्य स्वरूपं द्विधा विभज्यते – पारमार्थिकं व्यावहारिकञ्च। पारमार्थिकसत्यस्य परिभाषा शाङ्करभाष्यानुसारमेवं दीयते – 'यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यम्'[1] इति। अर्थात् यस्मिन् पदार्थे निश्चयेन कोऽपि विकारः न लक्ष्यते तत् सत्यम्। ईदृशं सत्यमाध्यात्मिकसत्यमिति नाम्नापि अभिधीयते। अपरतः व्यावहारिकं सत्यं हि प्रमाणसम्बद्धस्य विषयस्य व्यक्तीकरणम्। यथोक्तं गीताभाष्ये– 'सत्यं प्रमाणेनावबुद्धस्यार्थस्य तथैव भाषणम्'[2] इति। अत्र प्रमाणं खलु तथ्यमेव। तथ्यञ्च भौतिकी वास्तविकता, यथार्थघटनाजातयः, वस्तुनिष्ठं तत्त्वम्, प्रत्यक्षानुभवः इत्यादयः। वस्तुतः शोधकर्मणा यत् सत्यं प्रतिष्ठापितं भवति, तद् व्यवहारिकं सत्यमेव। ईदृशस्य सत्यस्य निश्चयकरणे शोधक्षेत्रे काश्चन नीतयः वर्तन्ते याः सामान्यतः 'शोधनीतिः' इति कथ्यते।

शोधकार्ये युक्तिबोधेन सार्धं नैतिकबोधोऽपि युगपदपरिहार्यतया अपेक्षते। शोधविषयिणी नीतिः गवेषणाकार्यस्य नैतिकीं गुणवत्तामाधत्ते। कस्मिंश्चित् गवेषणाकार्ये 'किं करणीयम्', 'किमकरणीयम्' इत्येतत्सर्वमौचित्यानुसारमालोचयति शोधनीतिः। प्रायशः गवेषणापरिमण्डले शोधकर्ता, शोधसिद्धान्तानां प्रयोक्ता, शोधविषयश्चेति पक्षत्रयं विद्यते। फलतः एतेषां पक्षाणां पक्षयोः वा परस्परं मिथस्क्रियया केचन नीतिविषयाः समुद्भवन्ति। यस्मिन् गवेषणाकार्ये युगपत् बहवः गवेषकाः कार्ये निरताः भवन्ति, तत्र शोधविषयस्य गोपनीयत्वं रक्षणीयम्। एवञ्च शोधसिद्धान्तान् समादाय लोककल्याणाय प्रायः विविधा व्यवस्था अङ्गीक्रियते, तस्मात् गवेषणाकर्म यथा याथातथ्यं स्यात्, तदीयं याथार्थ्यं यथा रक्षितं स्यात्, तद्विषये शोधकर्तुः नैतिक-दायित्वं वर्तते।

विविधायाः विद्याशाखायाः शोधनीतिविषयाः भिन्नाः भिन्नाः स्युः। यथा चिकित्स्याविद्यां समाश्रित्य शोधकर्मणि याः नीतयः विवेच्यन्ते, संस्कृतसाहित्यमाधारीकृत्य प्रस्तुते गवेषणाकर्मणि ताः नीतयः प्रायशः न परिलक्ष्यन्ते, तत्र नैतिकतायाः विचारक्षेत्रं न्यूनाधिकतया

---

* सहायकः अध्यापकः, कृष्णनाथकॉलेज, वहरमपुरम्, पश्चिमबङ्गः

1. तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्यां प्रथमानुवाकस्य 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रोपरि शाङ्करभाष्ये
2. श्रीमद्भगवद्गीतायाः 10.4 संख्यकं श्लोकमवलम्ब्य मधुसूदनसरस्वतीकृतायां गूढार्थदीपिका-टीकायाम्

भिन्नमेव स्यात्। किञ्च, वाणिज्यिकशोधस्यापि अस्ति काचित् स्वकीया शोधनीतिः। सामान्यतः गवेषकाः शोधनीतेः येषु विषयेषु कृतप्रयत्नाः भवेयुः, ते खलु -

1. शोधकर्मणः सर्वदा सर्वथा च सुस्पष्टं सुदृढं तात्त्विकमालम्बनं स्यात्, शोधकर्तृभिः कदापि कञ्चिदपि विषयविशेषं यथोपयुक्तं तथ्यं विना प्रमाणीकर्तुं न यतनीयम्।
2. गवेषकैः एतद् दाढर्येन निर्धारणीयं यत् शोधप्रबन्धे तैः उपनिबद्धानि तथ्यानि वैज्ञानिकरीत्यानुसंहितानि, पुनश्च तानि सर्वाणि सम्पूर्णतः विषयनिष्ठान्यपि। वस्तुतः गवेषणाकार्ये गुणप्रकर्षस्य विधानार्थमेव तत्राभ्रान्तं तथ्यं सन्निवेष्टव्यम्।
3. शोधसम्बद्धानां तथ्यानां परिसंख्यानगते याथार्थ्यविषये शोधार्थिभिः भ्रमात्मकं वर्णनं न कर्तव्यम्, अपिचोपलब्धानां तथ्यानां परिवर्तनेन शोधपरिणामविषयकं वक्तव्यमतिरञ्जितं न करणीयं गवेषकैः।
4. क्षेत्रसमीक्षात्मके गवेषणाकार्ये तथ्यसंग्राहकेभ्यः शिक्षार्थिभ्यः गवेषकेभ्यः तथ्यदातृभ्यश्च यथायोग्यं स्वीकृतिदानं कर्तव्यम्। उपयुक्ते स्थले एतस्याकरणं गर्हितमनैतिकं कर्म। अपि च, प्रयोजनीये स्थले साक्षात्कारदातॄणां परिचयादिकं यथा गोपनीयं स्यात् तदपि लक्ष्यीकरणीयम्।
5. पूर्ववर्ति-गवेषकैः लेखकैर्वा उद्भाविता धारणा तत्त्वभावना उद्धृतिः वेति शोधप्रबन्धे व्यवहृता चेत् तत्सम्बद्धा स्वीकृतिः अवश्यमेव स्वीकरणीया। वस्तुतः शोधप्रबन्धे शोधसम्पर्कितानां समेषां स्वीकृतिदानं गवेषणायाः अन्यतमं वैशिष्ट्यमस्ति।
6. अन्यलिखितं विषयम्, वयःकनिष्ठानां गवेषकानां रचितं निबन्धम्, अपरैः संगृहीतं तथ्यं स्वकीयेन नाम्ना व्यवहारः- नीतिविरुद्धेषु कर्मसु एकतमः। तस्मादेतत् सर्वथा परिहर्त्तव्यम्। मनसा सम्यक् ध्येयं यत् गवेषणायां कृतिचौर्य्यं (Plagiarism) सदैव वर्जनीयम्।
7. गवेषणायाः कृते तथ्यविकृतिः, स्वकपोलकल्पित-तथ्यसन्निवेशः, प्रकृततथ्यस्यो-ल्लङ्घनमित्यादिकं कर्म शोधनीत्या जातुचिदेव न समर्थ्यते।
8. गवेषणाकर्मणि प्रायः परस्परं वैमत्यं तिष्ठत्येव। परन्तु तदर्थं साभिप्रायमपरेषामर्त्तनं न करणीयम्। शोधकर्मणि नियुक्तेषु कमपि कामपि वा लक्ष्यीकृत्य वैषम्यमूलक-माचरणं न विधेयम्।
9. शोधानुसन्धाने शोधकर्तुः मननशीलतापेक्षते। अपरैरनुसन्धितं वस्तु भाषान्तरेण प्रकाशनमपि नीतिवहिर्भूतम्। अत एव प्रामाणिकी प्रबन्धप्रकाशना गवेषणायाः गुरुत्वपूर्णमभिमुखमस्ति।
10. शोधकर्मणः लौकिक-दायबद्धता विद्यते। शोधकार्येण इहलोकस्य कथमपि मङ्गलं भविष्यतीति काम्यते। येनानुसन्धानेन लोकजीवनेऽहितकरः विपर्ययः प्रादुर्भवति, तादृशी गवेषणा न काम्या।

**सम्प्रति शोधनीतौ अन्तर्भाविताः विषयाः विशदीक्रियन्ते**

**शोधार्थिनः पात्रता**– गवेषणमेकमसन्दिग्धमनुसन्धानं यत्र निर्दिष्टतया विशिष्टा वैज्ञानिकरीतिः अङ्गीक्रियते। इदञ्च सन्देहातीतरूपेणायाससाध्यं प्रामाणिकं सत्कर्मापि। अत्र समाकलितानां तथ्यानामुपलब्ध्यनुसारं विश्लेषणेन तथा तर्कसहितं परीक्षणेन निष्कर्षो प्रस्तूयते। एवम्प्रकारेण शोधकर्म ज्ञानपरिधिं प्रसरति। तस्मात् शोधार्थिभिरपि कानिचन वैशिष्ट्यानि अर्जितव्यानि सन्ति। शैक्षिकसंस्थागते शोधपरिसरे शोधार्थिषु शोधानुकूलाः गुणाः सन्ति न वेति सम्यक् विचारणीयाः विभागाध्यक्षैः अपरैरध्यापकैश्च। स्वकीये स्वार्थे प्राधान्यमारोप्य अनध्ययनपरस्य मननहीनस्यायोग्यजनस्य शोधार्थिरूपेण ग्रहणम्, विश्वविद्यालयस्तरे तदीयं च पञ्जीकरणमसमीचीनमेव। ईदृशः गवेषकः केनापि प्रकारेण उपाधिं प्राप्य परवर्तिनि काले प्रायः हीनां गुरुपरम्परामनुसरति, येन परिणामतः शोधक्षेत्रस्यैव हानिः भवति। अत एव शोधकार्याय अधिकारिरूपेण निरन्तरमध्ययनशीलाः मननपराः स्थैर्यधैर्यपरायणाः शोधोद्देश्यज्ञाः शिक्षार्थिनः एव नियोजितव्याः इति निश्चप्रचम्। यथोक्तं महाकविना भवभूतिना –

**शास्त्रे प्रतिष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी।**[1]
**कालानुरोधः प्रतिभानवत्वमेते गुणाः कामदुघा क्रियासु॥** इति।

शोधक्षेत्रे इदमपि निश्चयीकरणीयं यत् शोधविषयस्य निर्धारणं शोधकर्तुः स्वेच्छानुसारं स्यादिति। शोधविषयचयनं शोधनिर्देशकस्याथवा कस्याप्यन्यस्याभिप्रायानुसारं न भवेत्। अर्थात् विषयचयने शोधार्थिनः स्वतन्त्रता रक्षितव्या। एवञ्च शोधविषयस्य विश्लेषणेऽपि शोधकर्तुः स्वाधीनता काम्या। यदा गवेषकः स्वाभिप्रायानुसारं कमपि शोधविषयं चिनोति, तदा स साग्रहं तस्मिन् विषयेऽभिनिवेशं कर्तुं शक्यते। प्रसङ्गेऽस्मिन् इदमपि स्मर्तव्यं यत् शोधार्थिनोऽपि मनोवृत्तिः शोधानुगता कार्य्या। शोधार्थी न केवलमुपाधिलाभस्य हेतोः शोधकार्य्यं करिष्यति, अपि तु गवेषणायाः कृते निर्धारिते क्षेत्रविशेषे तदीयं मौलिकं योगदानमपि स्थास्यतीत्यवधेयम्। अर्थात् गवेषकदृष्ट्या शोधकार्य्यं मुख्यम् उपाधिप्राप्तिश्च गुणीभूता भवेदिति तात्पर्यम्। शोधार्थिनां शोधविषयस्यान्तिमे निष्कर्षे गमनात् प्रागेव कदापि कस्मिंश्चित् पूर्वकल्पिते सिद्धान्ते विश्वासः न स्थापनीयः। अनेन तदीया गवेषकसत्ता विनश्यति। गवेषकैः इदमपि आवश्यकतया ध्येयं यद् यावत्पर्यन्तं शोधकार्यस्यान्तिमरूपं न समाधीयते, तावत्पर्यन्तं शोधनिष्कर्षः सर्वजनीनः न करणीयः। वैज्ञानिकरीत्या सम्यक् पर्यवेक्षणेन शोधकार्यस्य पूर्णतापादनात् परमेव शोधपरिणामः सर्वेभ्यः प्रकाशनीयः। शेषतः वक्तव्यं यत् गवेषणमेकं दुरूहं कर्म, विघ्नसङ्कुलमपि। अत एव गवेषणाकाले विघ्नशतैरपि परितः विघ्निते सत्यपि शोधकार्यं न परित्यजनीयं गवेषकैः। निष्ठापूर्वकं निरन्तरं प्रयत्नशीलाः तथा लक्ष्यसिद्धिं प्रति कटिबद्धाः भवेयुः गवेषकाः। एषो हि गुणः उत्तमानां शोधाधिकारिणाम्। प्रसङ्गतः विशाखदत्तेन कथिता वाण्येकात्रोदाह्रियते या शोधार्थिषु साधु प्रयुज्यते। तद्यथा –

1. मालतीमाधवप्रकरणे 3.11

**प्रारभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः।**[1]
**विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति॥** इति।

**शोधनिर्देशकस्यार्हत्वम्**- महनीये शोधकार्ये निर्देशकस्यातीव गुरुत्वं वर्तते। वस्तुतः यथायथं निर्देशनं विना शोधकार्यं न सम्पाद्यते। गवेषकस्य योग्यतां यथार्थतया विचार्यैव तदीये पञ्जीकरणे शोधनिर्देशकैः सम्मतिः देया। आत्मस्वार्थं विचिन्त्य कदाप्ययोग्यं जनं शोधकर्मणि स्थानं न देयं गवेषणानिर्देशकैरित्येतत्तु पूर्वमेवोक्तम्। यतो हि प्रकृतेन शोधार्थिना एव उत्तमः शोधः सम्पादितः भवितुमर्हति। स्वकीयं सामर्थ्यं न विविच्यैव यस्मिन् कस्मिन्नपि विषये शोधनिर्देशना न कर्तव्या शोधतत्त्वावधायकैः। यथा न हि सर्वः सर्वं जानाति, तद्वदेकस्मिन् काले समेषां शास्त्र-साहित्यपक्षाणां शोधनिर्देशकः न भवितुमर्हति कोऽपि। यदि लोभवशादेवं क्रियते, तर्हि शोधार्थिना उपाधिलाभसम्भवेऽपि तदीयं कार्यमुच्चस्तरीयं न भवेत्। अत एव निर्देशनशक्त्या सह उपाधेः सम्बन्धः न भवतु, परन्तु विषयज्ञानेन सह भवतु इति शोधनीतिः स्पष्टीकरोति। एतदर्थं न केवलं विश्वविद्यालयस्थानां प्राध्यापकानामपि च महाविद्यालयानां प्रातिभशक्तिसम्पन्नानाम-ध्यापकानामपि गवेषणकर्मणि निर्देशनाधिकारः प्रदातव्यः। साम्प्रतिके काले महाविद्यालय-स्याध्यापकानां शोधकर्मणि निर्देशनाधिकारोऽस्त्यपि। अस्तु, गवेषणाक्षेत्रे शोधार्थिवत् शोधनिर्देशकस्यापि पूर्वमान्यतानुसारं कोऽपि शोधसिद्धान्तः न ग्रहणीयः। एवम्प्रकारेण शोधनिर्देशकस्य काङ्क्षितेषु गुणेषु विचारशीलता, स्पष्टता, धैर्य्यं, सहिष्णुतादयः गुणाः इष्यन्ते।

**कृतिचौर्यहीनता**- शोधः आद्यन्तं ऋणपरकं कर्म। शोधार्थी गवेषणार्थमाकरग्रन्थेभ्यः विभिन्नेभ्यः सहायकग्रन्थेभ्यश्च उद्धृतीः अधमर्णरूपेण गृहणाति। विषयप्रतिपादनाय, खण्डन-मण्डनरीत्या सिद्धान्तमुपस्थापनाय चोद्धृतीनामतीव गुरुत्वं वर्तते। उद्धृतयः एव अभिमतानां प्रामाण्यमेधन्ते। परन्तु उद्धृतिग्रहणे सम्पादिते सति तस्य यथायथं स्वीकृतिदानमपि गवेषकैः कर्तव्यम्। अन्यथास्य व्यतिक्रमः व्यापारः कृतिचौर्येऽन्तर्भाव्यते। यथायथमाकरस्थल-मनुल्लिख्यापरेषां रचनातः भावम्, भाषाम्, रचनायाः अंशविशेषं वात्मकृतिः इत्युक्त्वा प्रकाशनमथवा स्वकीयायां कृतौ संयोजनं कृतिचौर्य्यं कुम्भीलकवृत्तिः वा कथ्यते। क्षेत्रविशेषे इदमपकर्म दण्डनीयमप्यस्ति। ग्रन्थस्वत्वमुक्तरचनातोऽप्यंशविशेषमाकल्य तच्चास्वीकृत्य निजरचनायामुपयोगः सांस्कृतिकापराधत्वेन गण्यते। अत एव नीतिमान् शोधार्थी सर्वदा एवम् प्रकारात् अनैतिककर्मतः आत्मानं दूरे स्थापयेत्। यतो हि शोधक्षेत्रे अभिनवोद्भावनस्यापेक्षया स्वच्छताधिकतया काङ्क्ष्यते। कस्यचित् लिखितां कृतिं धारणां वा स्वकीये लेखने उपादाय तत्सम्बद्धं स्वीकृतिदानं नागौरवावहम्। अपितु एतत् इतिकर्तव्यताज्ञानसम्पन्नस्य गवेषकस्य उत्तमः गुणः एवास्ति। अनेन च शोधनीतिरपि रक्षिता स्यात्।

---

1. मुद्राराक्षसनाटके 2.17

**प्रामाणिकता वैधता च**– प्रमाणसिद्धता तथा वैधता शोधकार्यस्य गुणप्रकर्षं ख्यापयति। इदञ्च शोधपद्धतेः गवेषणाकौशलस्य परिमापनप्रक्रियायाः वा साधुत्वमुत्कर्षतां च सूचयति। प्रामाणिकता परिमाप–परिणामस्य धारावाहिकतां निर्दिशति। एवञ्च वैधता परिमाप–परिणामस्य याथार्थ्यमाक्षिपति। शोधपरिसरे, विशेषतया परिमाणात्मके शोधक्षेत्रे (Quantitative Research) शोधपरिकल्पनायाम्, शोधपद्धतिनिर्वाचने, शोधपरिणामनिरूपणे प्रामाणिकतायाः वैधतायाश्च गुरुत्वमवश्यं स्वीकार्यम्। प्रामाणिकत्वं वैधत्वं च मिथः सम्पर्कयुक्तम्; परन्तु इमे प्रत्येकं विषयान्तरं सूचयतः। किञ्चन परिमापनं (Measurement) वैधतारहितमपि प्रामाण्यं भवितुमर्हति। किन्तु साधारणतया किमपि परिमापनं वैधं चेत् तत् प्रामाणिकमपि भवति। शोधक्षेत्रे प्रामाण्यनिर्धारणस्य वैधत्वनिश्चयकरणस्य या कार्यप्रणाली विद्यते सा निश्चयेनावलम्बनीया।

किञ्च, शोधविषयकाः सिद्धान्ताः प्रकृत्यावश्यमेव स्पष्टीभूताः स्युः। पुनश्च उपलब्धेषु तथ्यादिषु स्वेच्छया सामान्यमपि परिवर्तनं न कार्य्यम्। अविशुद्धं तथ्यं शोधस्य प्रामाण्यं वैधत्वं च विनाशयति। अतः शोधाध्ययने दूषिततथ्याभावः ऐकान्तिकतया इष्यते।

**पक्षपातहीनत्वम्**– गवेषणाकार्यस्य लक्ष्यमेव ज्ञानपरिसरस्य विवर्धनम्, तं चोत्तरकालिकानां शिक्षार्थिनां शोधार्थिनां कृते ग्राह्यत्वेनोपस्थापनम्। प्रत्येकं शोधकार्यस्य किमपि उत्तरदायित्वं वर्तते, येन तत् लौकिकसमस्यान् निराकरोति। अत एव शोधकार्याणि सर्वदा अतीव यत्नेन भ्रान्तिरहितमार्गेण च समाधेयानि। परन्तु यदा गवेषकः केवलं स्वकीयं स्वार्थं चिन्तयति, स्वप्रयोजनमग्रे स्थानं ददाति, तदा स शोधानुसंबद्धं विषयं तदनुरूपं मन्यते, विश्लेषयति, शोधपरिणामं च तथैव परिचालयति। ईदृश्यां शोधपरिणतौ आत्मनिष्ठता यथा प्रतिफलति, वस्तुनिष्ठता तादृशी न प्रतिभाति। फलतः शोधस्य हानिः भवति। एतदृतेऽपि कदाचित् गवेषणायाः कृते चयनकृते विषये गवेषकस्य व्युत्पत्त्यभावात् दक्षताभावाच्च शोधकार्यं व्याहतं भवति। परिणामतः शोधस्योत्कर्षता दूरीभवति। गवेषणायाः पूर्वं, गवेषणासमये च विषयेऽस्मिन् मतिः दातव्या।

**भ्रान्तधारणारहितत्वम्**– शोधकर्तुः स्वकीयं वागाडम्बरममूलकधारणापरिपोषकता जातुचित् गवेषणायाः मानं पण्डयते। प्रायः गवेषकेषु काश्चन भ्रान्तिपूर्णाः धारणाः विद्यन्ते, याश्च शोधप्रकर्षं विशेषेण पंसयन्ति। केचन चिन्तयन्ति, गवेषणा केवलं गवेषकस्य प्रयोजननिवृत्त्यर्थम्, अनयान्यस्य समाजस्य वा कोऽपि अनुकूलः फललाभः न भवति। अन्यां विद्योपाधिं प्राप्तये प्रस्तुते बृहत्प्रबन्धे (Dissertation) तथ्योपादानानां परिवर्तनेन संयोजनेन चैतत् डक्टरेट्–उपाधिलाभार्थमपि व्यवहारयोग्यं भवेदिति केषाञ्चित् धारणा। अपरैः मन्यन्ते, कारण–प्रभावयोः सम्बन्धं प्रतिष्ठापयितुं मिथ सम्बन्धयोः पारस्परिकदक्षतायाः वा गणना आवश्यकी। अपि च, उन्नततरा साङ्ख्यकीय–कार्यविधिः

गवेषणायां न योजनीया इति केचित् भावयन्ति। कदाचित् गवेषकेण मानससामर्थ्यापेक्षया तदीयं शोधकार्यमुच्चाभिलाषसम्पन्नेन प्रकल्पत्वेन विपरिणम्यते। एतेन शोधस्य क्षतिः साध्यते। अत एव ईदृश्यः धारणाः गवेषकाणां मनस्तः अवश्यमेव निष्कासनीयाः।

**कल्पितानुमानेनादुष्टम्**– साधारणतया कृत्स्नं प्रयोगात्मके शोधकार्येऽनुमानान्यपेक्षन्ते। इमान्यनुमानानि न केनापि विचारेण सत्यतया प्रतिस्थाप्यन्ते, परन्तु गवेषणायाः याथार्थ्यनिश्चये तथा च प्रामाण्यनिर्धारणे विशिष्टमवदानमस्ति एषाम्। अनुमानानामेतेषां प्रायशः आलम्बनं खलु विशिष्टाभ्यां सभ्यतासंस्कृतिभ्यां सह सम्बद्धं सर्वजनीनं सत्यम्, यन्न वास्तविकतया सङ्गच्छते। कदाचित् शोधकर्तारः तेषां स्वकीयं कल्पनाशक्त्यनुसारमनुमानानि ग्रन्थन्ते; अपि च प्रकृतानुमानापेक्षया स्वात्मनिष्ठतां (Subjectivity) तथा तात्क्षणिकमुद्देश्यं प्रति गुरुत्वं प्रदाय ते गवेषकाः कल्पितानुमानैरेभिः गवेषणायां विकृतिं साधयन्ति। अत एव इमान्यनुमानानि शोधकर्तृभिः सयत्नमनुसरणीयानि; तानि च प्रयोजनानुसारं सीमितरूपेण प्रयोक्तव्यानि।

**खञ्जयुक्त्याशोभितम्**– तथ्यानां विषयनिष्ठया सह युक्त्याः सम्बन्धो वर्तते। शोधप्रबन्धे तथ्यपरम्परा पूर्वप्रस्तावितेन नियमेनाकल्यते। शोधकर्मसु सर्वेषु प्राप्तिसाध्यानां तथ्यानां विषयनिर्वाचनादारभ्यान्तिमाध्यायपर्यन्तं साधारणीकरणं क्रियते। प्रक्रियैषा न्यायसङ्गता समस्यासमाधानाय। वैशिष्ट्यस्यास्याभावेन शोधकर्म केवलमुपलब्धानां तथ्यानां संग्राहक-मात्रमिति विविच्यते। संक्षेपतः वक्तव्यमिदं यत् कस्यापि गवेषणकार्यस्य नैतिकीं गुणवत्तां विवर्धनाय गवेषकैः स्वयमेव विज्ञानात्मिका तथा च मानविकगुणात्मिका सरणिः अवलम्बनीया; नो चेत् तादृशं शोधकर्म नाममात्रेणोपहासास्पदं लिखितं वस्तु स्यात्।

परिशेषेण वक्तुं शक्यते यत् प्रतिष्ठानगते शोधकार्ये यद्यपि शोधकर्तुः भाविकं प्रयोजनमन्तर्निहितं विद्यते, तथापि शोधकर्म यथा तत्त्वविश्लेषणेनैव नान्तमेति, तद्विषयोऽपि चिन्तनीयः। गवेषणायां तादृक् कार्यविधिः ग्रहणीयः, येन साधारणेषु जनेषु शोधकार्यस्य सामान्यमपि सुफलं प्रवर्तते। विशेषतः समाज-संस्कृतिविषयके शोधकार्ये लक्ष्यमिदमाराध्यते। इदमपि सत्यं यत् सर्वदा समेषां शोधकार्याणां प्रत्यक्षं सुफलं मेलिष्यतीति न शोधपद्धतिविज्ञानेन समर्थ्यते। परन्तु शोधकार्यं केवलं तत्त्वविश्लेषणसर्वस्वं भविष्यति इत्यपि न काम्यम्। प्रत्येकं गवेषणायाः उल्लेखार्हमभिमुखद्वयमस्ति। एकतः ज्ञानपरिसरस्य विवर्धनम्, अपरतः लोकजीवने तदीयं हितकारकमवदानम्। या गवेषणा सदर्थभूतायाः धारणायाः प्रसारणे, नवीनधारणानिर्मितौ, नवचिन्तनस्य आनयने च कार्यकरीं भूमिकां नयति, सैव गवेषणा मर्यादापूर्णा स्यात्। सममेव विज्ञानमनस्कता, श्रमं प्रति मर्यादा, सत्यवादिता, विश्वसनीयता, उपपन्ने विद्याक्षेत्रे अंशदानायाभीप्सा, मानविकी दृष्टिभङ्गिमा, विश्वव्यापिनी कल्याणकामिता, सांस्कृतिक-मूल्यबोधः, सर्जनशीलता इत्यादयः गुणाः गवेषकैरर्जितव्याः। अनेन च गवेषणा सर्वथा सफलीभूता भवेदिति मन्यामहे।

## परिशीलिता ग्रन्थसूची


**संस्कृतग्रन्थाः**

1. महर्षिः वेदव्यासः : श्रीमद्भगवद्गीता (तत्त्वप्रकाशिकेत्याद्यष्टटीकोपेता, द्वितीयभागः), शास्त्री-जीवराम-लल्लूरामः, बक्रे-महादेव-गङ्गाधर-रावः, दिनकर-विष्णु-गोखले (सम्पादकाः), नई दिल्ली परिमलपब्लिकेशन्स, 2018
2. डॉ. नगेन्द्रः (सम्पा.), अनुसन्धानस्य प्रविधि-प्रक्रिया, डॉ. हर्षनाथमिश्रः (अनु.), नवदेहली : राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः), 2018

**बङ्गभाषोपेताः ग्रन्थाः**

1. इसलाम, शेख मकवुल, गवेषणार पद्धतिविज्ञान : साहित्य-समाज-संस्कृति, कलकाता : बङ्गीय साहित्य संसद, 2012
2. बन्द्योपाध्याय, सुरभि, गवेषणा : प्रकरण ओ पद्धति, कलकाता : देज पावलिशिं, 2011
3. मुखोपाध्याय, जगमोहन, गवेषणापत्र अनुसन्धान ओ रचना, कलकाता : आनन्द प्रकाशन, 2012

**हिन्दीग्रन्थाः**

1. कटारिया, सुरेन्द्र तथा नेहा पालीवाल, शोध प्रविधि, नई दिल्ली : नेशनल पब्लिशिंग हाउस, 2018
2. गुप्त, उमाकान्त तथा ब्रजरतन जोशी (सम्पा.), अनुसन्धान : स्वरूप और आयाम, नयी दिल्ली : वाणी प्रकाशन, 2016
3. द्विवेदी, प्रभुनाथ तथा सुरेशचन्द्र चौबे, संस्कृत शोध-प्रविधि, वाराणसी : शारदा संस्कृत संस्थान, 2017
4. सिंहल, बैजनाथ, शोध : स्वरूप एवं मानक व्यावहारिक कार्यविधि, नयी दिल्ली : वाणी प्रकाशन, 2017

**संस्कृत-हिन्दी भाषाद्वयोपेताः ग्रन्थाः**

1. तैत्तिरीयोपनिषद् (सानुवाद शाङ्करभाष्यसहित), घनश्यामदासजालानः (प्रकाशकः), गोरखपुरम् : गीताप्रेस, 1993 संवत्।
2. विशाखदत्तः : मुद्राराक्षसम्, तारिणीश-शर्मा (सम्पा.), इलाहाबादः 1983
3. भवभूतिः : मालतीमाधवम्, रामप्रताप-त्रिपाठी (सम्पा.), इलाहाबादः, लोक-भारती-प्रकशनम्, 1973

**आङ्गलग्रन्थाः**

1. Dash, Keshab Chandra, Elements of Research Methodology in Sanskrit, Varanasi, Chaukhambha Sanskrit Sansthan, 2009
2. Murti, M. Srimannarayana, Methodology in Indological Research, Delhi, Bharatiya Book Corporation, 2018




**शोधप्रभा**
वर्ष : 47, तृतीयोऽङ्कः

# शैवदर्शने श्रुतेः प्रामाण्यविषये अभिनवगुप्तमतम्

**श्री-अरूपमसान्यालः***

सुप्राचीनकालादेव भारतीयसंस्कृतिक्षेत्रे प्रवहति धाराद्वयं निरर्गलतया। धाराद्वयं हि वैदिकी आगमिकी च। यथा भारतभूमिभागं गङ्गायमुनयोर्मिलितधारा सुफलं कृतवती, तथैव हि तान्त्रिकवैदिकधारापि भारतीयसंस्कृतिक्षेत्रे। तत्र आगमवेदयोः कदाचिद्दृश्यते आपातविरोधः, कदाचित्तु परिपूरकत्वेनोपस्थितिः उभयोः। अध्यात्मदृशा मूलतः तयोः यद्यपि नास्ति विरोधः, परन्तु आनुष्ठानिकप्रक्रियादिषु समस्ति वैलक्षण्यम्। वैदिकपरम्परानुगेषु वैदिकदर्शनेषु वेदस्तु परमं प्रमाणास्पदम्, आगमिकपरम्परायान्तु आगमवचनानि। अतः आपाततः श्रुत्वा निश्चिनोति कोऽपि यत् वेद आगमस्य विरोधी इति। एवमेव केषुचिदागमेषु वेदमन्त्रस्य निन्दा वेदागमविरोधित्वमिति विषयमेव द्रढयति। किन्तु एतेषां वचनानां तु तन्त्रप्रशंसायामेव तात्पर्यं न तु वेदनिन्दायाम्। अतः न केवलं प्रायोगिकपक्षेण सह, दार्शनिकपक्षेणापि सह साम्यं भजते कदाचित् आगमः वेदश्च। आगमपरम्परायां न केवलमागमवचनानां वेदवचसामपि प्रामाण्यमङ्गीक्रियते। एतस्यां हि महत्यामागमपरम्परायां समभूत् महामाहेश्वराचार्यः श्रीअभिनवगुप्तपादः। शैवदर्शनस्य मुख्यानां सिद्धान्तानां परिष्करणे संस्थापने च महती भूमिका परिपालिता महामाहेश्वराचार्येणाभिनवगुप्तेन। आगमश्रुतेरस्यापाततः विरोधस्यावसानं युक्तिपुरस्सरं विहितम् अभिनवगुप्तपादेन स्वग्रन्थेषु। अतः तत्प्रामाण्यविषये यथा वैदिकदर्शनानां दृष्टिः आगमदर्शनेष्वपि तादृशी दृष्टिरुपलभ्यते वा इति विचार्यते बन्धेऽस्मिन्। पुनश्च श्रुतेः प्रामाण्यविचारे अभिनवगुप्तपादानां मतम् आगमदर्शनपरम्परायाः इतिहासे अन्यतममवदानमिति वक्तुं पार्यते।

## 1. त्रिकशैवपरम्परायाः परिचयः

लेखप्रारम्भे त्रिकशैवपरम्पराविषये अपि अवगन्तव्यम्। सम्प्रदायस्यास्य ग्रन्थाः ये उपलभ्यन्ते, ते यद्यपि अष्टमशतकीयाः, परन्तु इतः पूर्वमपि आसीत् सम्प्रदायस्यास्य अस्तित्वम्। शैवमतानुसारं त्र्यम्बकः एव अस्य दर्शनस्य प्रथमः प्रचारकः[1]। अस्य च दर्शनस्य अन्यतमः प्रवक्ता सोमानन्दः शिवदृष्टिनामकं ग्रन्थं व्यरचयत्[2]। तेन स्वग्रन्थे

---

* शोधच्छात्रः, रामकृष्णमिशनविवेकानन्दशैक्षणिकशोधसंस्थानम्, बेलूरमठम्, हावड़ा, पश्चिमबङ्गराज्यम्

1. भारतीयदर्शनम्, पृ. 470
2. तदेव, पृ. 474

त्र्यम्बकादित्यः स्वपूर्वजत्वेन कथितः। त्र्यम्बकादित्यस्य वंशपरम्परायां षोडशतमपुरुषः आसीत् संगमादित्यः, तस्य एव परम्परायां चतुर्थपुरुषः आसीत् शिवदृष्टिकृत् सोमानन्दः[1]। उक्तं हि शिवदृष्ट्यामस्मिन् विषये –

**नाम्ना संगमादित्यो वर्षादित्योऽपि तत्सुतः।**
**तस्याप्यभूत् स भगवानरुणादित्यसंज्ञकः॥**

**आनन्दसंज्ञकस्तस्मादुद्‌बभूव तथाविधः।**
**तस्मादस्मि समुद्भूतः सोमानन्दाख्य ईदृशः॥**[2]

त्र्यम्बकादित्यस्य वंशजेषु संगमादित्यः एव काश्मीरमाजगाम। तेनैव तत्र अस्य शास्त्रस्य प्रचारः विहितः। त्र्यम्बकादित्यप्रवर्तितत्वात् शास्त्रस्यास्य नाम त्र्यम्बकशास्त्रमिति प्रथितिं गतम्[3]। त्र्यम्बकस्य शिष्यैः एव शास्त्रस्यास्य प्रचारः कृतः[4]। यतः संगमादित्यः काश्मीराद् बहिः आगत्य दर्शनस्यास्य प्रचारं काश्मीरदेशे व्यदधादतः दर्शनमिदं काश्मीरात् बहिः आसीत् इति ज्ञायते। त्र्यम्बकस्य पुत्राः एव अस्याः त्र्यम्बकपरम्परायाः प्रचारकाः। त्र्यम्बकस्य कन्यायाः परम्परा अर्धत्र्यम्बकनाम्ना प्रसिद्धा। सा च परम्परा शाक्तप्रधाना कौलमार्गीया परम्परा विद्यते इति प्रसिद्धिः काश्मीरशैवेषु।[5] तत्र मध्यदेशे एव एतस्य दर्शनस्य उत्पत्तिः। तत्रैव त्र्यम्बकादित्येनैकः मठः स्थापितः। 'तेरम्ब' इति नाम्ना[6] तस्य प्रसिद्धिः आसीत्। शिवदृष्टौ सोमानन्देन अत्र लिखितं किञ्चित्–

**एवमेषां त्रम्बकाख्या तेरम्बा इति देशभाषया।**
**स्थिता शिष्यप्रशिष्याद्यैर्विस्तीर्णा मठिकोदिता॥**[7]

तस्य च त्र्यम्बकमठस्य परम्परासम्बद्धमिदं दर्शनम्। अतः वस्तुतः यद्यपि दर्शनस्यास्य त्र्यम्बकदर्शनमिति शास्त्रीयाभिधा[8] परन्तु त्रिकाख्ययापि बहुत्रैतेषामुल्लेखः लभ्यते। त्रिकपदेन व्यवहारस्य बाहुल्यमस्ति तथा त्रिकपदस्यास्य बहुविधव्याख्यापि भवति। एवञ्चास्य दर्शनस्य षडर्धशास्त्रं षडर्धक्रमनयः इत्यादीनि नामानि दृश्यन्ते। अतः परम्परायाः अस्याः षडर्धपरम्परा त्रिकपरम्परा वेति समाख्या।

---

1. भारतीयदर्शनम्, पृ. 470
2. शिवदृष्टिः, पृ. 211
3. भारतीयदर्शनम्, पृ. 470
4. लुप्तागमसंग्रहः, पृ. 119
5. भारतीयदर्शनम्, पृ. 514
6. तन्त्रागमीयधर्मदर्शनम्, भागः–2, पृ. 234
7. शिवदृष्टिः, पृ. 211
8. भारतीयदर्शनम्, पृ. 470

**2. अभिनवगुप्तमते त्रिकशैवपरम्परायां श्रुतिस्वरूपम्-**

आगमदर्शनपरम्परासु काश्मीरकाद्वैतत्रिकशैवपरम्परा सुप्रसिद्धा। अस्यां हि काश्मीरकाद्वैतशैवपरम्परारायां श्रुते: परमेशकर्तृत्वं सूचितम्। वस्तुत: शैवदर्शने शब्दप्रमाणत्वेन स्वीकृतस्यागमवचनस्यापि परमेशकर्तृकत्वमेव स्वीकृतम्। स्पष्टतया उच्यते चेत् वक्तुं शक्यते इदं यत् शब्दराशिरूपस्य वेदस्य आगमस्य च विमर्शस्वरूपत्वमेव उररीक्रियते त्रिकशैवै:। अत: परमार्थस्वरूपस्य शिवस्य शब्देन सह तादात्म्यसम्बन्धात् शिवस्वरूपमेव तत् यत: शब्दार्थयोरभेद: इति आगमिकनय:। कथं तत्? उच्यते यत् वेदस्तु कार्यरूप: शैवदृशि तस्य कर्ता शिव एव। अत: कर्म कर्तुरेव स्वरूपम् इति कारणात् वेदस्यापि परमेशाभिन्नत्वम्। यत: शक्तिशक्तिमतोरभेद: इति त्रिकशैवनय: अत: विमर्शस्वरूपात् वेदात् प्रकाशात्मक: शिव: न भिन्न:।[1] अधिकांशानि वैदिकदर्शनानि वेदापौरुषेत्वप्रतिपादन-पराणि परन्तु आगमे तस्य पौरुषेयत्वम्। अत्रोल्लेख्यं यत् पौरुषेयत्वस्य वैदिकी दृष्टि: तान्त्रिकीदृष्टित: पृथक्त्वं भजते। वैदिकदृष्ट्या पौरुषेयत्वे अनित्यत्वापत्ति:, तस्य कर्तृकत्वात्, परन्तु तान्त्रिकदर्शने न तथा। अत्र आगमिकनये सर्वे कार्या: शिवस्य स्वाभिन्नाया: शक्तेरेव उल्लासा:। अत: कर्तृकत्वेऽपि परमार्थत: कर्तृस्वरूपत्वात् तस्य पौरुषेयस्यापि अपौरुषेयत्वं यत: कर्तु: स्वरूपं तु नित्यम्। अभिनवगुप्तमते आचार:, शास्त्रम्, आप्तोदेशादय: प्रसिद्धे: विभिन्नानि रूपाणि[2]। अत: आगमस्य प्रतिभात्वेन, निबद्धप्रसिद्धित्वेन, अनिबद्धप्रसिद्धित्वेन, आप्तोपदेशरूपेण शास्त्रत्वं परिगणितम्। उक्तं हि तेन स्वीये गीतार्थसंग्रहाख्ये ग्रन्थे- "शास्त्रं नाम शुद्धविमर्शनि:ष्यन्दवाक्ततत्त्वपरमार्थब्रह्मस्वभावम् स्वतन्त्रप्रसारतया आन्तरत्वात् बोधस्वभावात् बहि: प्रसरपर्यन्तं तच्च सुसूक्ष्मप्रणवादिरूपात् व्यवहारप्रसिद्धप्रवादपरम्परापर्यन्तम्।[3]" वस्तुत: अभिनवगुप्तेन वेदस्वरूपालोचनक्रमे अविगीतप्रसिद्धित्वेन वेदस्य स्वरूपं वर्णितम् अर्थात् वेद: अविगीतप्रसिद्धिरूप:। अविगीतप्रसिद्धिविषये ज्ञानात् प्राक् किं नाम प्रसिद्धि: इति अवश्यमवगन्तव्यम्। निगदितं हि तन्त्रालोकस्य विवेकटीकायां जयरथेन- 'प्रसिद्धिर्हि सततोदितत्वादविगानेन उल्लसिता स्वात्मविमर्शप्रतीतिरूपा प्रमातु: स्वभाव एवेति'।[4] इयं हि अविगीतप्रसिद्धिरेव विमर्श:। ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्याम् अभिनवगुप्तस्योक्तिरस्मिन् विषये- "एनमागममविगीत-प्रसिद्धिलक्षणं विभजति तथाहि इति। वेदशैववैष्णवादीनां हि योऽर्थो विमृश्यमान: परम्परानुष्ठानेन, सोऽनेनैव उक्त: अनेनैव उत्पादित: अमुष्मात् कालादारभ्यैव प्रवृत्त इति न अवच्छेदभागीति अविच्छिन्नप्रकाशधर्मो विमर्शात्मा परमेश्वर एवेति अनादित्वमेव तत्र।"[5]

1. अभिनवगुप्त का तन्त्रागमीयदर्शन, पृ. 16
2. अभिनवगुप्त का तन्त्रागमीयदर्शन, पृ. 17
3. गीतार्थसंग्रह:, भा 1, पृ. 247
4. तन्त्रालोक: भाग:- 12 पृ. 367
5. ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, भाग: - 3, पृ. 72

इत्थं वाक्येनानेन वक्तुं शक्यते यत् वेदः विमर्शरूपः अनिबद्धप्रसिद्धित्वेनानादिकालात् प्रसृतः। आप्तानामनुष्ठानादिना सा अनिबद्धप्रसिद्धिरेव वाक्येनोपनिबद्धा सती शास्त्ररूपेणाभि-धीयते।[1] अतः एषा अनिबद्धप्रसिद्धिर्यद्यपि निबद्धप्रसिद्धित्वेन शास्त्रपदवीमधिरोहति, तथाप्यस्याः मूलं तु परविमर्शरूपमेव। अतः सामान्यदृष्ट्या परविमर्शस्वरूपत्वात् सर्वे वेदा अपि आगमपदभाजः। इयं हि शैवदृष्टिः वेदस्वरूपविषये।

### 3. त्रिकशैवपरम्परायां श्रुतिप्रामाण्यम्-

यद्यपि काश्मीरशैवेषु साधनागतदृष्ट्या स्वीक्रियते आगमप्रामाण्यं तथापि श्रुतेरपि प्रामाण्यं नास्वीकृतम्। अतः यद्यपि तेषामागमानुयायित्वं दृश्यते, परन्तु ते स्मृत्युक्तानि संस्काराद्यनुष्ठानानि समाचरन्तः वेदप्रामाण्यमेव स्वीकृतवन्तः। काश्मीरशैवेषु स्वाशाखाध्याय-नाद्यप्यवलोक्यते स्म। परन्तु आध्यात्मिकसाधनाविषये तेषां शैवागमे एव प्रामाण्यबुद्धिः। पुनः लोकव्यवाहारादिषु श्रौतस्मार्तसंस्काराः एव रक्ष्यन्ते तैः। अतः स्मार्तत्वेऽपि तेषां तन्त्रानुयायित्वं समवलोक्यते अस्माभिः। अतएव काश्मीरशैवेषु वैदिकतान्त्रिकसंस्कृतयोः समन्वयः एव दृग्गोचरीभवति। तान्त्रिकपरम्परायामपि वेदः अनुल्लिखितः न तिष्ठति। शैवागमपरम्परायामपि समस्ति वेदस्योल्लेखः। तत्र सदाशिवस्य पञ्चवक्त्रेभ्य एव वेदचतुष्टयस्य सृष्टिरिति व्यक्तीकृतम्। उक्तं हि स्वच्छन्दतन्त्राख्ये त्रिकशैवशास्त्रे-

**सद्योजातस्तु ऋग्वेदो वामदेवो यजुः स्मृतः।**
**अघोरः सामवेदस्तु पुरुषोऽथर्व उच्यते।।**[2]

इत्यत्र स्पष्टं दृश्यते आगमाः वेदमपि परमेशकर्तृकं मन्यन्ते, अतः नास्ति विरोधः। पुनः सर्वेषामागमत्वस्वीकारात् समन्वयदृष्टिरपि प्राप्यते अस्माभिः। उक्तं हि तन्त्रालोके-

**सांख्यं योगं पाञ्चरात्रं वेदांश्चैव न निन्दयेत्,**
**यतः शिवोद्भवाः सर्वे।**[3]

इत्यत्र दृश्यते यत् त्रिकशैवदृष्टिः सर्वेषामेव शास्त्राणामागमत्वं स्वीकृत्य शास्त्रैक्यम् अङ्गीकृतवती। वस्तुतः शिवमुखोद्भूतत्वादेतानि शास्त्राणि अनिन्द्यानि। अतः अभिनवगुप्तमतं वेदानामनिन्द्यत्वमेव द्रढयति। पुनः भेदस्य कारणविषयेऽपि उक्तं तन्त्रालोके यथा-

---

1. अभिनवगुप्त का तन्त्रागमीयदर्शन, पृ. 16
2. स्वच्छन्दतन्त्रम्, पटलः - 11, पृ. 34, श्लो- 42
3. तन्त्रालोकः, भागः - 12, पृ. 375

**एकस्मादागमाच्चैते खण्डखण्डा व्यपोद्धृताः।**

**लोके स्युरागमास्तैश्च जनो भ्राम्यति मोहितः।।**[1]

विवृता हि जयरथेन कारिकैषा- 'व्यपोद्धृता कपिलसुगतादिभिः। मोहितो भ्राम्यतीति तत्तत्प्रणीतया परस्परविरुद्धार्थाभिधायकत्वं मन्वानो यथावस्तुदर्शी न स्यात्।'[2] अतः वेदविषये आगमस्य दृष्टिः श्रद्धापूर्णा एव। एवमपि वक्तुं शक्यते यत् आगमदृशा वेदागमयोः समानत्वमेव दृश्यते। परन्तु यद्यपि स्वरूपविषये तादात्म्यम् अङ्गीकृतम्, तथापि प्रामाण्यविषये मतिर्भिद्यते तेषाम्। वस्तुतः आगमस्य सर्वव्यापित्वस्वीकारात् सर्वाणि शास्त्राण्यपि आगमपदवाच्यानि भवितुमर्हन्ति। परन्तु साधनाविषये वेदागमविषये शैवानां मतमस्ति भिन्नम्। यतः निगदितमभिनवगुप्तेन तन्त्रालोके-

**अनेकागमपक्षेऽपि वाच्या विषयभेदिता।**
**अवश्यमूर्ध्वाधरता स्थित्या प्रामाण्यसिद्धये।।**
**अन्यथा नैव कस्यापि प्रामाण्यं सिद्ध्यति ध्रुवम्।**[3]

वस्तुतः यद्यपि प्रागेवोक्तं त्रिकशैवैः वेदागमयोरभेदत्वं स्वीकृतं तथापि एतयोरुत्पकर्षापकर्षयोर्विचारः क्रियते शैवशासननये। यदा कस्मिन्नपि विषये वेदागमयोर्विरोधः, तदैव एषः विचारः विधीयते। विरोधे सति शैवागमस्यैव प्रामाण्यं न तु श्रुतेः। शैवशास्त्रे अस्मिन् उत्कर्षविषये द्वारद्वारिभावः समाश्रितः। द्वारद्वारिभावेन क्रमशः शास्त्राणां प्रामाण्यमुत्कर्षापकर्षश्च निश्चीयते। द्वारद्वारिभावोऽयमुपायोपेयभावं द्योतयति अर्थात् यस्य क्रमेऽस्मिन् ऊर्ध्वस्थितिः तस्य परमोपेयत्वम्। अतः त्रिकनयः परमोपेयत्वेन तिष्ठति। अस्मिन् उत्कर्षनिरूपणप्रसङ्गे शैवागमस्य परं प्रामाण्यं स्वीकृतम्। अतः तदेव मोक्षे परमोपेयः इति तु निश्चप्रचम्। तत्र क्रमशः उत्कृष्यमानसम्प्रदायानां विषये आगमवचांसि यद्यपि भिद्यन्ते[4], परन्तु शैवागमस्य परप्रामाण्यं तु निश्चितं तथा शैवात् वेदस्य अवरत्वमपि।[5] जयरथेन स्वविवेके समुद्धृतः एकः श्लोकः तथाहि-

**वेदाच्छैवं ततो वामं ततो दक्षः ततः कुलम्।**
**ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्।।**[6]

तत्र सम्प्रदायाः क्रमशः- वेदः, सिद्धान्तशैवः, वामः, दक्षः, कुलम्, मतः, कौलम्, त्रिकम्। अत्रोल्लेख्यं यत् उत्कर्षविषये निर्दिष्टः कश्चन क्रमः उररीकृतः। तत्र

1. तन्त्रालोकः, भागः - 12, पृ. 376
2. तदेव
3. तदेव
4. तन्त्रालोकः, भागः - 8, पृ. 181
5. तदेव
6. तदेव

सिद्धान्तशैवादितान्त्रिकसम्प्रदायानां वेदात् उत्कर्षमुद्घोषितम्। पुनः बौद्धाद्यवैदिकसम्प्रदायानाञ्च वेदादवरत्वम्।[1] अतः प्रामाण्यविषये तान्त्रिकसम्प्रदायानामेवोत्कृष्टत्वमिष्टं त्रिकशैवानामिति प्रतीयते। उत्कर्षस्यास्य निर्धारणन्तु विविधप्रकारेण विहितम्। तेनैव श्रुत्यादिशास्त्रस्य प्रामाण्यं निश्चितम् त्रिकशैवैः। प्रथमतः अधिकारिभेदः मानदण्डतया प्रतिभाति। शैवीसाधनपरम्परायाः विधयः अनुष्ठानानि च प्रचलितश्रौतस्मार्तानुष्ठानात् भिन्नानि। त्रिकशैवाः कदाचित् वीराचारे संलग्नाः सन्तः मद्यपानादिस्मृतिनिषिद्धं कर्मादिकं कुर्वन्ति, परन्तु तादृशसाधनायां सर्वेषामनधिकारात् शैवानामुत्कृष्टत्वं यतः तत्र नास्ति समेषामधिकारः। पुनः अनुभूतसत्यदृशापि उत्कर्षः निर्दिष्टः। त्रिकशैवशक्तिपातदृशा वर्गीकरणं तु बहुलतया प्रचलितम्। साधनानां वर्गीकरणवत् शास्त्राणामपि वर्गीकरणं शक्तिपाततारतम्यवशादेव इत्यपि त्रिकस्य दृष्टिः। तथा चोक्तम्–

**क्रमिकः शक्तिपातश्च सिद्धान्ते वामके ततः।**
**दक्षे मते कुले कौले षडर्धे हृदये ततः॥**

अस्य च श्लोकस्य त्रिधा व्याख्या कर्तुं शक्यते। प्रथमतः शैवमते अधस्तनानां सम्प्रदायानां प्रतिपादितसिद्धान्ताः मन्दशक्तिपातविशिष्टानामेव। यस्य शक्तिपातः तीव्रः, तस्य कृते ततः उत्कृष्टः उपयुक्तः। इत्थं त्रिकशैवशास्त्रं तु तीव्रशक्तिपातविशिष्टानां कृते। उत वा क्रमशः शक्तिपातस्य तारतम्यवशात् तत्तच्छास्त्रप्रतिपादितानुभवाः साधकमनसि जायन्ते। अतः तद्दृष्ट्या शक्तिपातस्य पारम्ये त्रिकशैवानामेव स्थानम्। उपर्युक्तश्लोके यद्यपि नास्तिकानां बौद्धादीनां नास्ति समुल्लेखः परन्तु अन्यत्र नास्तिकमतेभ्यः वेदस्य प्राबल्यमेव उररीकृतम्। यद्यपि अधस्तनानां शास्त्राणां क्रमोल्लेखेऽपि कदाचित् विसंगतिर्दृश्यते नाम। कुत्रचित् वैष्णवमतप्रतिपादकानि पाञ्चरात्राणि शास्त्राणि सौगतशास्त्रेभ्यः पूर्वम् उल्लिखितानि अर्थात् सौगतात्तेषामवरत्वं पुनश्च कुत्रापि समवलोक्यते वैष्णवशास्त्राणां पाञ्चरात्राख्यानाञ्च उत्कर्षः। परन्तु शैवमतस्य प्रकाशकानां शास्त्राणां तु सदैव उत्कर्षता अन्येभ्यः शास्त्रेभ्यः। शैवेषु शास्त्रेष्वपि त्रिकनयः उत्कृष्टतमः। अत एव निगदितुं पार्यते इदं यत् वेदाः शैवशास्त्रेभ्यः अन्येभ्यः पाञ्चरात्रादिशास्त्रेभ्यः अवराः पुनः सिद्धान्तशैव-शास्त्रेभ्यः पाञ्चरात्रादितन्त्रशास्त्राणि अवराणि।

इत्थं स्पष्टमेवेदं यत् त्रिकशैवपरम्परायां त्रिकशास्त्रैः सह वेदस्य विरोधे त्रिकस्यैव प्रामाण्यं न तु वेदस्य। वस्तुतः वैदिकी श्रुतिः सामान्यजनानां कृते प्रवृत्ता विहिता च परन्तु त्रिकसाधनमार्गनिष्ठानां तु शैवी श्रुतिरेव। प्राक् यत् त्रिकशैवानां श्रौतस्मार्तपरम्परायानु-यायित्वं कथितं तत्तु अविरोधे इति मन्तव्यम्। पुनरेवमपि वक्तुं शक्यते यत् आचारादिषु वैदिकत्वेऽपि प्रकृततः ते शैवपरम्परायामेवानुसरन्ति एतत्तु कौलेष्वपि दृश्यते तेषां श्लोकमप्यस्ति तद्विषये यथा–

1. तन्त्रालोकः भागः – 8, पृ. 18

**अन्तःकौलो बहिःशैवो लोकाचारे तु वैदिकः।**
**सारमादाय तिष्ठेत नारिकेलफलं यथा॥**[1]

एवमन्येष्वपि तन्त्रसम्प्रदायेषु एवं बाह्याचारादिषु श्रुतिपरम्परानुसरणं समवलोक्यते। वस्तुतः अधिकारिभेदं स्वीकृत्यापि वेदस्य तन्त्रस्य प्रामाण्यं रक्षितुं शक्यते। यथा शुद्ध्यशुद्ध्यादिभेदः श्रौतपरम्परायां प्रधानः परन्तु मालिनीविजयादिषु उक्तम्- नात्रशुद्धिर्न-चाशुद्धिरिति।[2] अतः शुद्ध्यशुद्ध्यादिषु वैदिकी श्रुतिशैवागमवचनयोः विरोधः, तर्हि कस्य प्रामाण्यमिति चेत् उच्यते यत् अत्र उत्सर्गापवादविधिराश्रयणीयः। अतः वैदिकश्रुति-रुत्सर्गविधित्वेनोररीक्रियते तान्त्रिकी च अपवादत्वेन, अतः नास्ति विरोधः तथा श्रुतेः शैवागमस्यापि प्रामाण्यं रक्षितम्। अतः सामान्यात्मिकया वैदिकीश्रुत्या सह विशेषात्मिकया शैवीश्रुतेर्विरोधपरिहारः कर्तुं शक्यते। वैदिकीश्रुतेर्लक्ष्यं तु लोकस्थितिरक्षणेऽपि शैवीश्रुत्या तु स्वानन्दावाप्तिरेव लक्ष्यं भवति।[3]

पुनः बाध्यबाधकभावोऽपि प्रामाण्यविषये अवलोक्यते। त्रिकनये शिववचनमेव प्रमाणम्। सर्वज्ञानोत्तरतन्त्रस्य वचनम्-

**नरर्षिदेवद्रुहिणविष्णुरुद्राद्युदीरितम्।**
**उत्तरोत्तरवैशिष्ट्यात् पूर्वपूर्वप्रबाधकम्॥**[4]

अर्थात् ऋषिवचनात् देववचनस्य प्रामाण्यम्, अतः ऋषिवचनात् देववचनं बाध्यते। एवमुत्तरवर्त्तिनां बाधकभावः पूर्ववर्त्तिनाञ्च बाधकभावः क्रमशः। इत्थं बाध्यबाधकभावमाश्रित्य शैववचनमेव परं प्रमाणमिति दृश्यते काश्मीरशैवशास्त्रेषु।

अतः वक्तुं शक्यते यत् वेदस्य प्रामाण्यविषये त्रिकशैवपरम्परा बद्धादरा एव तिष्ठति। परन्तु तस्य स्वकीया साम्प्रदायिकी दृष्टि अपि समवलोक्यते अस्माभिः यत्र हि आगमशास्त्रमेव परमं प्रमाणम्।

**परिशीलितग्रन्थसूची-**

1. स्वच्छन्दतन्त्रम् (पञ्चमो भागः), मिश्रः परमहंसः (सम्पा.), वाराणसी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, 2005।
2. अभिनवगुप्तः, ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, (तृतीयः खण्डः)। पण्डितमधुसूदन-कौलशास्त्री (सम्पा.), श्रीनगरम् : प्रत्नविद्याप्रकाशकार्यालयः (गवेषणविभागः जम्मू-कश्मीरराज्यस्य), 1943।

---

1. तन्त्रालोकविवेकः, भागः - 3, पृ. 26-28
2. मालिनीविजयतन्त्रम्, पृ. 15
3. तन्त्रालोकविवेकः, भागः - 3, पृ. 230
4. तन्त्रालोकः, भागः - 3, श्लो. 248-49

3. अभिनवगुप्तः, गीतार्थसंग्रहव्याख्या, लक्ष्मणरैना, श्रीनगरम्, काश्मीर, 1966।

4. अभिनवगुप्तः, तन्त्रालोकः, (तृतीयो भागः)। पण्डितमधुसूदनकौलशास्त्री (सम्पा.), श्रीनगरम् : प्रत्नविद्याप्रकाशकार्यालयः (गवेषणविभागः जम्मू-कश्मीरराज्यस्य), 1921।

5. अभिनवगुप्तः, तन्त्रालोकः, (अष्टमो भागः)। पण्डितमधुसूदनकौलशास्त्री (सम्पा.), श्रीनगरम् : प्रत्नविद्याप्रकाशकार्यालयः (गवेषणविभागः जम्मू-कश्मीरराज्यस्य), 1926।

6. अभिनवगुप्तः, तन्त्रालोकः, (द्वादशो भागः), पण्डितमधुसूदनकौलशास्त्री (सम्पा.), श्रीनगरम् : प्रत्नविद्याप्रकाशकार्यालयः (गवेषणविभागः जम्मू-कश्मीरराज्यस्य), 1938।

7. अभिनवगुप्तः, मालनीविजयवार्तिकम्, पण्डितमधुसूदनकौलशास्त्री (सम्पा.) श्रीनगरम् : प्रत्नविद्याप्रकाशकार्यालयः (गवेषणविभागः जम्मूकश्मीरराज्यस्य), 1921।

8. सोमानन्दः, शिवदृष्टिः, पण्डितमधुसूदनकौलशास्त्री (सम्पा.) श्रीनगरम् : प्रत्नविद्याप्रकाशकार्यालयः (गवेषणविभागः जम्मूकश्मीरराज्यस्य), 1934।

9. उपाध्यायः बलदेव, भारतीयदर्शनम् वाराणसी, शारदामन्दिरम्, 2011।

10. द्विवेदः ब्रजवल्लभः, लुप्तागमसंग्रहः (द्वितीयो भागः), वाराणसी, सम्पूर्णानन्द-संस्कृतविश्वविद्यालयः, 1983।

11. रस्तोगी नवजीवन, अभिनवगुप्त का तन्त्रागमीयदर्शन।



UGC-CARE Listed
**जुलाई-सितम्बर, 2022**

**शोधप्रभा**
वर्ष : 47, तृतीयोऽङ्कः

# शाङ्करमते पञ्चीकरणं लययोगविमर्शश्च

**मानसी***

**शोधसारांशः**

वैदिकवाङ्मयम् भारतीयदर्शनस्याधारभूतं स्रोतो वर्तते, यत्र प्राथम्येन नासदीय-हिरण्यगर्भसूक्तादिषु सृष्टेः आदिकारणे चैतन्ये विचारोऽक्रियत। उपनिषदो वेदप्रतिपादित-दार्शनिकसिद्धान्तानां बृहद्व्याख्यां प्रस्तुवन्ति। एकमात्रचैतन्यस्य सत्तायाः स्थापनायै आचार्यशङ्करेण श्रुतिवाक्यैरनुभवैश्च परिपोषिततर्काणामाधारेण 'पञ्चीकरणम्' इत्यभिधे सङ्क्षिप्तप्रकरणग्रन्थे पञ्चीकरणद्वारा लययोगस्य भावनायाः प्रतिपादनं कृतं वर्त्तते यदद्वैततत्त्वज्ञाने सहायकं वर्त्तते। अज्ञानोपहितब्रह्मणः उत्तरोत्तरं पञ्चतत्त्वानामुत्पत्तिरन्ते च क्रमशः उत्तरोत्तरक्रमेण विलीनस्य प्रक्रियैव पञ्चीकरणे विविक्तास्ति। एकस्यैव पञ्चीभवनं पञ्चीकरणं तथा अन्तकाले पञ्चतत्त्वानामेकीभावो लययोगः कथ्यते। पञ्चीकरणप्रक्रियानुसारं मायाशबलब्रह्मणोः कार्यरूपमिदं जगत्। अतः व्यष्टेः समष्टिं प्रति लयचिन्तनं विधेयम्। प्रस्तुतशोधपत्रे आत्मानुसन्धानमार्गे पञ्चीकरणद्वारा लययोगस्य प्रक्रियायां विचारविमर्शः कृतो वर्त्तते।

**कूटशब्दाः**

*पञ्चीकरणं, ब्रह्म, लययोगः, ओङ्कारः, प्राज्ञः, तैजस्, जीवप्रभृतयः।*

**प्रस्तावना**

भारतीयदर्शनस्य विस्तृतपरम्पराया मूलस्तम्भत्वेन वैदिकवाङ्मयं वर्त्तते। सृष्टेरनादि-प्रवाहत एव वैदिकमनीषिभिः ऋषि-ऋषिकाभिश्च साङ्गोपाङ्गवेदाध्ययनमक्रियत। वैदिकोपनिषदो भारतीयदर्शनजगते सर्वाधिकमुपकारकशास्त्राणि सन्ति, यत्र मानवमस्तिष्के समुद्भवितृप्रश्नानां समेषां समाधानं प्राप्यते। सृष्टेर्मूलकारणं किम्? इत्यस्य गहन-जिज्ञासायां सत्यां परमसत्यस्यान्वेषणहेतोरनेकैः ऋषिभिराचार्यैर्दार्शनिकैश्च वेदप्रतिपादितगूढ-सिद्धान्तानां वेदवाक्यानाञ्चालोडनं विहितम्। तत्पश्चाद्विविधदार्शनिकसिद्धान्तानां प्रतिपादनं विस्तृतशास्त्रलेखनपरम्परया संरक्षणं सम्वर्धनं च विहितम्। परम्परामिमामनुसरन्नेव शङ्कराचार्यो वेदान्तसूत्रस्य श्रीमद्भगवद्गीतायाः उपनिषद्वाक्यानाञ्चाधारेण ब्रह्म स्वभावतो नित्यशुद्धबुद्धमुक्तस्वभावममन्यत तथा च **'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव**

* शोधच्छात्रा, संस्कृतप्राच्यविद्याध्ययनसंस्थानम्, जवाहरलालनेहरूविश्वविद्यालयः, नवदेहली

**नापरः'**[1] वाक्येन एकमात्रसत्य-निर्विकल्प-निरुपाधिकब्रह्मणः सत्तामङ्गीचकार। आचार्यशङ्करमतेन **'अयमात्मा ब्रह्म'**[2], **'एकमेवाद्वितीयं ब्रह्म'**[3], **'नेह नानाऽस्ति किञ्चन'**[4] इत्यादिश्रुतयः जीवब्रह्मणोरभेदतां प्रतिपादयन्ति। ब्रह्म नित्यं शुद्धं बुद्धं मुक्तं सर्वज्ञञ्चास्ति, अतः जीवात्मा परमात्मनः अंशत्वात् स्वभावतो नित्यो मुक्तो ब्रह्मस्वरूपश्चास्ति- **'ममैवांशो जीवलोके जीवभूतः सनातनः'।**[5] प्रसङ्गेऽस्मिन् शङ्केयं भवति यद् जीवो स्वभावत एव सर्वदा मुक्तः सुखस्वरूपश्चास्ति तथा च ब्रह्मणस्तस्याभेदश्चेदुभयोर्मध्ये भेदप्रतीतेः कारणं किम्? मोक्षव्यवस्था कस्य कृते?

शङ्कराचार्येण अनादिस्वरूपं ज्ञानविरोधि-भावरूपमज्ञानमेव भेदप्रतीतेर्मुख्यं कारणमभिहितम्। सत्त्वप्रधानं मायोपहितं ब्रह्म ईश्वरभावमवाप्नोति, किन्तु अविद्यया आवृते सति चैतन्यं जीवसञ्ज्ञकं भवति, अज्ञानस्य च कारणात् तत् स्वात्मस्वरूपं न वेत्ति। सुखदुःखयोर्निमित्तत्वात्कृतं कर्म एव जीवं बन्धने पातयति, यस्य फलतो जीवः सांसारिकपदार्थधर्मान् अन्तःकरणवृत्तिभिः स्वात्मनि आरोप्य 'कर्त्ताहं भोक्ताहम्' इत्यादिव्यवहारं करोति, फलतश्चानेकप्रपञ्चेषु सन्निपत्य सुखदुःखमनुभवति। आत्मा तु ज्ञानात्प्रागपि नित्यो मुक्तो ब्रह्मस्वरूप एव भवति किन्तु जीव एव आत्मानं मिथ्याकर्त्ता भोक्तेत्यवगम्य दुःखनिवृत्तिहेतोः कर्त्तव्यानि करोति। अतः आसक्तिभावात् कृतकर्माण्येव बन्धकारणानि भवन्ति तथा च जीवद्वारा अनासक्तिभावात् कृतेषु कर्मस्वेव कर्माणि मोक्षमार्गस्योपकारकाणि भवन्ति। शङ्कराचार्येण अध्यासभाष्यस्य भूमिकायां सुस्पष्टीकृतं यच्छशरीरोपाधियुक्तो जीवः अन्तःकरणवृत्तिभिरात्मनि अध्यासं कर्त्तुं लगति। एष अध्यासः देहेन्द्रियवर्णादीनामाधारेण भवति तथा चायमेवाध्यासः संसारस्य कारणं भवति-

**"एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्त्तृत्वभोक्तृत्व-प्रवर्त्तकः सर्वलोकप्रत्यक्षः। अस्यानर्थहेतोः प्रहाणायाऽत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते।"**[6]

संसारस्य कारणमस्ति अविद्यायाः आवरणविक्षेपनामकं शक्तिद्वयम्। आवरणाभिध-शक्तिः आत्मज्ञानमार्गे अवरोधिका भवति। सा जीवदृष्टिं तथैव आच्छादयति यथा स्वल्पोऽपि मेघः अपरिमितसूर्यमण्डलमावृणोति। विक्षेपाभिधशक्तिः भ्रमं पृथिव्यादिसमस्त-प्रपञ्चमुद्भावयति। संसारस्य सर्वव्यवहाराणां सम्पादिका इयं विक्षेपशक्तिरेव, या सूक्ष्मशरीरात् स्थूलब्रह्माण्डपर्यन्तसंसारस्य रचनां करोति। अतः यथा पृथिव्यां पतितायां रज्जौ

---

1. श्रीमद्भगवद्गीता, 15.7
2. बृहदारण्यकोपनिषद्, 2.5.19
3. छान्दोग्योपनिषद्, 6.2.1
4. बृहदारण्यकोपनिषद्, 4.4.19
5. ब्रह्मज्ञानावलीमाला, 20
6. ब्रह्मसूत्रशाङ्करभाष्यम् (अध्यासभाष्यस्य भूमिकया)

प्रकाशाद्यनुपलब्धे: सर्पस्य भ्रमे सञ्जाते भयकम्पादिश्चोत्पद्यते तथैव आत्मविषयकमज्ञानं पृथिव्यादिप्रपञ्चोत्पत्तौ कारणं भवति।[1] उपर्युक्तवर्णितसमस्तप्रपञ्चस्य निवृत्ति: आत्मसत्यानुबोधे सति भवति, तथा च वेदान्तवाक्यान्येव अज्ञाननिवृत्ते: साधनानि भवन्ति। अत: सम्पूर्णमिथ्यात्वजगत: अज्ञानरूपमावरणं भित्त्वा कथमात्मानुसन्धानं क्रियेत? शङ्कराचार्येण 'पञ्चीकरणम्' इत्याख्ये ग्रन्थे स्वरूपनिश्चयाय अध्यारोपापवादविधिना उपर्युक्तविषयस्य सङ्क्षिप्तं गहनञ्च निरूपणं व्यधायि।

## पञ्चीकरणमिति ग्रन्थस्य प्रतिपाद्यम्

आचार्यशङ्कर: पञ्चीकरणनामके ग्रन्थे आत्मानुसन्धानप्रसङ्गे पञ्चीकरण-प्रक्रियामुल्लिखन् परमहंससंन्यासिनां कृते लययोगस्य प्रतिपादनं कृतवान् तथा च समाधिकाले चित्तसमाधानस्यालम्बनरूपप्रणवस्य निरूपणं विहितवान्। ग्रन्थे ओङ्कार-वाच्यतमोगुणप्रधानमायोपहितात्मन: एव समस्तपञ्चीकृतसूक्ष्मभूतानामुत्पत्तिम् एवञ्च सूक्ष्मभूतेभ्य: स्थूलभूतप्रपञ्चानाम् उत्पत्तिमुक्त्वा ओङ्काररूपब्रह्मण्येव तस्य विलय: प्रदर्शितोऽस्ति। आचार्यशङ्करद्वारा प्रणवनिरूपणस्याभिप्रायोऽसौ यदोङ्कारमाध्यमेन ब्रह्मण: स्थूलरूपस्याभिव्यक्तिर्भवति, द्वितीये पक्षे तस्मिन्नेव लीनत्वाज्जगत: सूक्ष्मरूपस्य ज्ञानं भवति। मायोपहितब्रह्मण: आकाशादिसूक्ष्मभूतानामुत्तरोत्तरमुत्पत्तिर्भवति प्रलये काले च क्रमश: पूर्वस्य पूर्वे विलयो भवति। अत: एकस्य पञ्चीभाव: पञ्चानाञ्चैकीभाव एव पञ्चीकरणमस्ति।

एकाकारस्य स्थितिरेव लययोगस्य पर्यायोऽस्ति। पञ्चीकरणप्रक्रियाद्वारा समस्तजगत: मिथ्यात्वं साधयित्वा परमहंसयोगिनां सच्चिदानन्दस्वरूपात्मतत्त्वस्य साक्षात्कार एव पञ्चीकरणस्य मूलोद्देश्यं वर्त्तते। लययोगे सर्वविधबाध्यपदार्थान् विरहय्य आत्मतत्त्वानुभव: करणीयो भवति, यस्मिन् द्वैतस्याद्वैते विलयो भवति। आचार्यशङ्करद्वारा वर्णिता पञ्चीकरणप्रक्रिया लययोगस्य प्रतिपादिकास्ति, या सुरेश्वराचार्येण 'पञ्चीकरणे' लिखिते निजवार्त्तिके स्पष्टीकृताऽस्ति।

## शङ्कराचार्याभिप्रेतलययोगाभिप्राय:

लयस्यार्थ: चित्तविलीनताऽस्ति योगस्य चार्थ: समाधि:।[2] उत्पन्नस्य प्रत्येकं पदार्थस्य (कार्यस्य) स्वकारणभावगम्यतैव, तस्मिन् लीनत्वं तद्रूपत्वमेव लययोग:। यथा घटदीपादीनां नाशानन्तरं मृत्तिकायामेव तद्रूपत्वभाव:। आवर्त्तबुद्बुद्प्रतीते: कारणं मनोऽस्ति। चित्ते

1. शक्तिद्वयं हि मायया विक्षेपावृत्तिरूपकम्।
   विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेत्।।
   अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयो:।
   आवृणोत्यपराशक्ति: सा संसारस्य कारणम्।। दृग्दृश्यविवेक:, 13-14
2. योग: समाधि:। योगसूत्रव्यासभाष्यम्, 1.1

(मनसि) विलीने द्वैतोपलब्धिर्न भवति।[1] समाधौ चित्तस्य बाह्यविषयेभ्य उपरमणं कृत्वा आत्मतत्त्वयोग एव लययोग:। अयमेव चित्तविलय इत्युच्यते। ब्रह्मसूत्रस्य 'जन्माद्यस्य यत:'[2] इति सूत्रानुसारं सम्पूर्णस्य दृश्यमानस्य जगत: कारणं ब्रह्मैव। जगदुत्पत्ते: अनन्तरं ब्रह्मण्येव स्थितं भवति अवसाने च तत्रैव विलीयते। आत्मन: परमात्मनि लय अथवा भवबन्धनाद् विमुच्य जीवभावेनात्मभावत्वप्राप्ति: एव लययोगोऽस्ति। आत्मसाक्षात्कार एव मनुष्यस्य लक्ष्यमस्ति, स्वलक्ष्येन सार्धम् एकाकारत्वमेव लययोगस्योद्देश्यमस्ति।[3]

'पञ्चीकरणे' परमहंससन्यासिनां कृते समाधिविधे: विशिष्टं प्रतिपादनं कृतमस्ति- यथाहि स कथं स्वात्मानुसन्धानं कर्त्तुं शक्नोति? ग्रन्थकारेण 'पञ्चीकरणे' पञ्चीकरण-प्रक्रियान्तर्गतसूक्ष्मभूतानामारोहावरोहक्रमेण विलयं विज्ञाप्य जगत: मिथ्यात्वं साधितमस्ति एवञ्च ओङ्कारस्य ब्रह्मणश्चाभेदस्वरूपस्य विवेचनं कृतमस्ति। साधकेन 'तत्त्वमसि', 'अयमात्मा ब्रह्म' इत्यादिमहावाक्यद्वारा तत्त्वनिर्णयं कृत्वा लयचिन्तनं करणीयम्। प्रसङ्गेऽस्मिन् तत्त्वविचारोऽपेक्षित: यत: तत्त्वविचारेण साधकेन बुध्यते यत् किं कस्य कारणम्? सार्धमेव पञ्चीकरणप्रक्रियावबोधेन तत्त्वविलयस्य क्रमो ज्ञायते। तत्त्वसाक्षात्काराय लययोग: एकमयनमस्ति तथा च ओ३म् अस्या: प्रक्रियाया आलम्बनं वर्त्तते। श्रुतिवाक्येन सम्बन्धेऽस्मिन् निर्देश: प्राप्तोऽस्ति-

**प्रणवो धनु: शरोऽह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।**
**अप्रमत्तेन बोद्धव्यं शरवत्तन्मयो भवेत्।।**[4]

**पञ्चमहाभूतानामुत्पत्ति:**

नित्येन निर्मुक्तेन निर्विकारेण परब्रह्मणा सृष्टेरुत्पत्तिकामनया तमोगुणयुक्तो भूत्वा स्वमायाशक्त्या जगत् असृज्यत, सूक्ष्मतन्मात्राणि च पञ्चतत्त्वेषु प्रतिष्ठापितानि।[5] पञ्चीकृतेभ्य: पञ्चभूतेभ्यो नामरूपात्मकस्य ब्रह्माण्डस्योत्पत्तिर्भवति। गिरिनदीवृक्षादय: सर्वे पञ्चमहाभूतेभ्य: उत्पद्यन्ते। तमोप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यात् ईश्वरात् आकाश: उत्पद्यते, आकाशाद्वायु:, वायोरग्नि:, अग्नेर्जलम्, जलात्पृथिवी उत्पद्यते। उत्पत्तिक्रमे आकाशादिषु पञ्चभूतेषु सत्त्वरजस्तमांसि कारणगुणप्रक्रमेण उत्पद्यन्ते, यस्मात्

---

1. मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम्।
   मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते।। गौडपादीयकारिका, 3.31
2. ब्रह्मसूत्रम्, 1.1.2
3. सर्वान्कामान्परित्यज्य अद्वैते परमे स्थिति:।, परमहंसोपनिषद् 3
4. मुण्डकोपनिषद्, 2.2.4
5. अथ भूतानां पञ्चानाम् ईश्वरसङ्कल्पवशात् पञ्चीकरणम् आसीत्।
   वेदान्तसङ्ग्रह:, पृष्ठसङ्ख्या 66
   आसीदेकं परं ब्रह्म नित्यमुक्तमविक्रियम्। तत्स्वमायया समावेशाद्बीजमव्याकृतात्मकम्॥
   पञ्चीकरणम् (वार्तिकम् 2), पृष्ठसङ्ख्या 36

तेषु तम:प्राधान्यं भवति सत्वरजसोर्गुणयोश्च न्यूनता भवति। विद्वन्मनोरञ्जिनीकारस्य मते अव्याकृतावस्थायामज्ञाने सत्त्वादिगुणानां यथा क्रमो भवति, तेनैव क्रमेण कार्येषु गुणाः उत्पद्यन्ते। कार्यपदार्थैः सार्धमेव तेषां कारणे विद्यमानानि सत्वरजस्तमांसि तेषु कार्येषु तदुत्पत्ति-समये एव उत्पद्यन्ते।[1] श्रीमद्भगवद्गीतायामुक्तमस्ति यत् **"गुणा गुणेषु वर्तन्ते"**[2] अर्थात् कार्यं स्वकार्यस्वरूपे एव तिष्ठति, कारणगुणाः कार्ये एव तिष्ठन्ति अन्यत् द्रव्यस्यानुगतिर्यदा भवति तदा गुणस्यानुगतिरपि भवति। तमोगुण-प्रधानविक्षेपशक्ति-मद्मायोपहितात्मनः सूक्ष्मभूतानामुत्पत्तिविवरणं तैत्तिरीयोपनिषदि स्पष्टं प्राप्यते-' **"तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी।"**[3] अस्यां श्रुतौ आत्मन एव पञ्चसूक्ष्मभूतानामुत्पत्तिः ज्ञापिता अस्ति। एतेषां जाग्रदवस्थायां व्यवहारायोग्यत्वात् सूक्ष्मभूतानि कथ्यन्ते। स्वविशुद्धे स्वरूपे तिष्ठन्ति अतः तन्मात्राणि उच्यन्ते, यतोहि स्वसूक्ष्मावस्थायामाकाशवायुरग्नि-जलपृथिवीषु क्रमशः शब्दस्पर्शरूपरसगन्धनामकाः स्वगुणा एव विद्यमानाः तिष्ठन्ति।

## सूक्ष्मशरीरम्

स्थूला सृष्टिः पञ्चीकृतभूतानां कार्यमस्ति पञ्चीकृतानि भूतानि च अपञ्चीकृतभूतानां कार्यमस्ति अर्थात् पञ्चीकृतानि भूतानि अपञ्चीकृतानां भूतानां स्वरूपमेवास्ति, तस्मात् पृथक् नास्ति। तेषु भूतेषु सर्वप्रथमं सूक्ष्मशरीरस्योत्पत्तिर्भवति। सूक्ष्मभूतानां सत्त्वांशात् पृथक्-पृथक् क्रमेण ज्ञानेन्द्रियाणि उत्पद्यन्ते, अन्यत् एतेभ्यः मिलितेभ्यो बुद्धिमनसी आविर्भवतः। अतः अन्तःकरणादयः सूक्ष्मभूतकार्यत्वात् तत्स्वरूपभूताः एव। एवं ज्ञानेन्द्रियैः सहिता बुद्धिः विज्ञानमयकोशो भवति, मनस्तु ज्ञानेन्द्रियैः सहितं मनोमयकोशो भवति। सत्त्वगुणस्य पश्चात् रजोगुणात् उत्पन्नेषु सूक्ष्मशरीरावयवेषु आकाशादिसूक्ष्मभूतानां रजोंशेभ्यः पृथक् पृथक् क्रमेण पञ्चकर्मेन्द्रियाणामुत्पत्तिर्भवति, समस्तेभ्यश्चः सूक्ष्मभूतेभ्यः पञ्चप्राणादीनामुत्पत्तिर्भवति। एतानि कर्मेन्द्रियाणि पञ्चप्राणादिभिः सह प्राणमयकोशस्य निर्माणं कुर्वन्ति। एतत् कोशत्रयं मिलितं सत् सूक्ष्मशरीरमित्युच्यते। एतेषु कोशेषु मध्ये विज्ञानमयकोशो ज्ञानशक्तिमान् कर्तृरूपः, तथा च विज्ञानमयकोशादवच्छिन्न आत्मा एव कर्त्ता भोक्ता सुखित्वदुखित्वाद्यभिमानत्वेनेहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते। इच्छाशक्तिमान् मनोमयकोश इच्छाशक्त्या युक्तो करणरूपोऽस्ति। प्राणमयः क्रियाशक्तिमान् कार्यरूपोऽस्ति। एतेषां सूक्ष्मशरीराणां एकत्वज्ञानविषये व्यष्टिसमष्ट्योर्वर्णनमाचार्यशङ्करेण 'पञ्चीकरणे' कृतमस्ति यत् अपञ्चीकृतमहाभूतेभ्यः (पञ्चभूतानां सूक्ष्मरूपेभ्यः शब्दस्पर्शरूपरसगन्धेभ्यः), तत्कार्येभ्यः पञ्चप्राणेभ्यः (प्राणापानसमानव्यानोदानेभ्यः),

---

1. कारणस्याव्याकृतस्य ये गुणाः सत्त्वादयस्तेषां प्रक्रमेण तान् गुणानारभ्य यथाकार्यक्रमं सत्त्वादिगुणाः सहैव कार्यैस्तेषूत्पद्यन्त इत्यर्थः। वेदान्तसारः (विद्वन्मनोरञ्जिनी टीका)
2. श्रीमद्भगवद्गीता, 3.28
3. तैत्तिरीयोपनिषद्, 2.1.1

दशेन्द्रियेभ्यः (पञ्चज्ञानेन्द्रियेभ्यः पञ्चकर्मेन्द्रियेभ्यश्च), मनसो बुद्धेश्चैतेभ्यः सप्तदशतत्त्वसमूहेभ्यः सूक्ष्मशरीरस्य (लिङ्गशरीरस्य) उत्पत्तिर्भवति। समष्ट्युपाधियुक्ताभिमानी 'हिरण्यगर्भः' आत्मनः सूक्ष्मशरीरञ्च व्यपदिश्यते। अस्यामवस्थायां चक्षुरादीन्द्रियाणां स्वविषयेषु अप्रवृत्तिकारणाद् जाग्रदवस्थायामनुभूतसंस्कारैर्विषयस्य ज्ञानं भवति यस्मादियं स्वप्नावस्थेत्युच्यते।[1] अतएव सूक्ष्मशरीरस्य समष्टिः 'स्थूलसृष्टेर्लयस्थानं' सूक्ष्मशरीरस्य च व्यष्टिः 'स्थूलशरीरस्य लयस्थानं' भवति। 'पञ्चीकरणे' सूक्ष्मव्यष्टिसमष्ट्युपाधिः, तैजसात्मा हिरण्यगर्भश्च ओङ्कारस्य द्वितीयमात्रा उकाररूपेण वर्ण्यते। अतः ज्ञानेन्द्रिय-कर्मेन्द्रियान्तःकरणसहितं सम्पूर्णं शरीरं पाञ्चभौतिकं वर्त्तते। तत्त्वदृष्ट्या पश्यामश्चेत् सर्वमेकमेव चैतन्यमात्रं वर्त्तते। यद्यप्युभयोः जलाशयप्रतिबिम्बिताकाशवज्जलबिन्दु-प्रतिबिम्बिताकाशवच्चाभेदः।

## स्थूलशरीरम्

सूक्ष्मभूतेभ्यः सूक्ष्मसृष्टेरनन्तरं स्थूलसृष्टेः स्थूलशरीरस्य चोत्पत्तिर्भवति। एतदर्थमेव पञ्चीकरणप्रक्रिया भवति। पञ्चीकरणद्वारा प्रत्येकं भूतेषु पञ्चानामपि तत्त्वानां सम्मिश्रणात् स्थूलत्वस्याधानं भवति। अपञ्चीकृतभूतानां (सूक्ष्मभूतानां) पञ्चीकृतत्वे सत्येव पञ्चस्थूल-भूतेभ्यः स्थूलसृष्टिरुत्पद्यते। 'पञ्चीकरणे' पञ्चीकरणप्रक्रियायाः विवरणं (प्रक्षिप्तांशरूपेण सम्मतं) प्राप्यते-

**"पञ्चमहाभूतानामेकैकं द्विधा विभज्य चतुर्धा कृत्वा स्वार्धभागं विहायेतरेषु पञ्चधा पञ्चीकृतेषु पञ्चीकरणं भवति।"[2]**

एतेभ्यः पञ्चीकृतभूतेभ्यः क्रमशः चतुर्दशलोकानां भूः, भुवः, स्वः, महः, जनः, तपः, सत्यम् (इत्युपरिस्थसप्तलोकानां), अतलवितलसुतलरसातलतलातलमहातलपाताल (इत्यधःस्थसप्तलोकानां), ब्रह्माण्डस्य तदन्तवर्त्तिचतुर्विधशरीराणां (जरायुजाण्डजोद्भिज-स्वेदजानां) चोत्पत्तिर्भवति।

शङ्कराचार्येण समष्टिव्यष्टिरूपस्थूलशरीरस्यैकत्वं प्रतिपादयताभिहितं यत् पञ्चीकृतानि पञ्चस्थूलभूतानि (आकाशवाय्वग्निजलपृथिव्यः) तत्कार्यञ्च जगद् 'विराड्' अस्ति, शरीररहितब्रह्मात्मनश्चोपाधित्वात्स्थूलशरीरं वर्त्तते, यतः स्थूलशरीरस्येन्द्रियाद्यवयवैः शब्दादिविषयाणां स्पष्टं ज्ञानं भवति, अतो जाग्रदवस्थेति व्यपदिश्यते। समष्टिरूपस्थूल-विराडवस्था व्यष्टिरूपस्थूलजागरितावस्था चेत्यनयोरुभयोरभिमानी आत्मा 'विराड्विश्वौ'

---

1. अपञ्चीकृतपञ्चमहाभूतानि पञ्चतन्मात्राणि तत्कार्यं च पञ्च प्राणाः, दशेन्द्रियाणि, मनो बुद्धिश्चेति सप्तदशकं लिङ्गं भौतिकं हिरण्यगर्भ इत्युच्यते। एतत्सूक्ष्मशरीरमात्मनः। करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्न इत्युच्यते। तदुभयाभिमान्यात्मा तैजसः। एतत्त्रयमुकारः। पञ्चीकरणम्, पृष्ठसङ्ख्या 2
2. पञ्चीकरणम्, पृष्ठसङ्ख्या 1

च स्तः।[1] इदं स्थूलशरीरमन्नविकारत्वात्कोशवदाच्छादकत्वाच्चान्नमयकोशो व्यपदिश्यते। आत्मनः स्थूलव्यष्टिसमष्ट्युपाधिः विराड् विश्वात्मा चेति त्रयम् ओङ्कारस्य प्रथममात्रा अकारस्वरूपमभिहितम्। आचार्यमते सम्पूर्णमपि कार्यकारणरूपं वस्तुजातमोङ्कारस्वरूपमेव। तत्त्वसाक्षात्कारहेतोः शङ्कराचार्येण पञ्चीकरणप्रक्रियाप्रतिपादनेन सह आत्मस्वरूपमाख्यातुम् ओङ्कारस्य मात्राणां विवेचनं कृतम्। एवम्प्रकारेण पञ्चीकृतपञ्चभूतेभ्यः स्थूलप्रपञ्च-स्योत्पत्तिर्भवति।

**कारणशरीरम्**

स्थूलसूक्ष्मशरीरयोः कारणभूतं चैतन्यप्रतिबिम्बयुक्तं यदात्मनः अज्ञानं तदव्याकृत-मित्युच्यते। अस्यामवस्थायां सर्वविधज्ञानस्य उपसंहारे भूतेऽपि बुद्ध्याः कारणरूपेणावस्थितेः आत्मनः सुषुप्त्यवस्था कथ्यते। एतस्मात्कारणात् शरीरस्य सुषुप्त्यवस्थायाश्चाभिमानी आत्मा 'प्राज्ञो' भवति। कारणव्यष्टिसमष्टिरूपप्राज्ञः, कारणशरीरं सुषुप्तिश्च ओङ्कारस्य तृतीयमात्रात्वेन मकारत्वेनाभिधीयते।[2] ज्ञाननिवर्त्यत्वात् कारणरूपमिदमज्ञानं न सत्, नासत्, न भिन्नं, नाभिन्नं, नावयवयुक्तं, नैव च निरवयवं वर्त्ततेऽपितु अनिर्वचनीयमस्ति। मिथ्यात्वेन अवस्थेयं ब्रह्मात्मनोरभेदज्ञानादेव निवर्त्या। सुरेश्वराचार्यमते ब्रह्म वस्तुतः एकमेव किन्तु व्यवहारदशायामज्ञानकारणात् तदधिदैवाध्यात्माधिभूतरूपेण प्रविभक्तं प्रतीयते, यतोहि प्रत्येकमिन्द्रियेषु तेषाभिमानिदेवत्वं भवति। परमार्थतस्तु ब्रह्म अविभक्तमेव।[3]

**लयचिन्तनक्रमः**

भूतानामुत्पत्तिस्तत्कार्यज्ञानाच्च साधकः तत्त्वानां विलयक्रमं स्पष्टरूपेण जानाति। लयचिन्तनाय सर्वप्रथमं पञ्चेन्द्रियाणां पञ्चभूततत्त्वानाञ्च तन्मात्रासु नियन्त्रणमावश्यकं भवति, यतोहि बाह्येन्द्रियाण्येव विषयान् प्रति आकृष्टानि भवन्ति। अतस्तन्मात्रासु नियन्त्रणस्थापनस्य अभ्यासः कर्त्तव्यः, येन जीवभावात्प्रमुच्य आत्मभावस्य दिव्यां स्थितिमवाप्तुं सक्षमाः स्याम। सुनियन्त्रितासु तन्मात्रासु पञ्चतत्त्वविनिर्मितस्थूलसूक्ष्मशरीरेषु आत्मनो नियन्त्रणं भवति। तत्पश्चादेव आनन्दस्य स्थितिः प्राप्यते। लयचिन्तनस्य प्रक्रियेयम् एवंरूपेणावगन्तुं शक्यते– ओङ्कारस्य मात्राणां लयचिन्तनेन पञ्चीकृताञ्चीकृतभूतानां लयचिन्तनम्

---

1. ॐ पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सर्वं विराडित्युच्यते। एतत् स्थूलशरीरमात्मनः। इन्द्रियैरर्थोपलब्धिर्जागरितम्। तदुभयाभिमान्यात्मा विश्वः। एतत् त्रयमकारः। पञ्चीकरणम्, पृष्ठसङ्ख्या 2
2. शरीरद्वयकारणमात्माज्ञानं साभासमव्याकृतमित्युच्यते। एतत्कारणशरीरमात्मनः। पञ्चीकरणम्, पृष्ठसङ्ख्या 3
3. अधिदैवतमध्यात्ममधिभूतमिति त्रिधा। एकं ब्रह्म विभागेन भ्रमाद्भाति न तत्त्वतः॥ पञ्चीकरणम् (वार्तिकम् 12), पृष्ठसङ्ख्या 73

अखिले ब्रह्माण्डे यस्मात् भूतात् यत्कार्यमुत्पद्यते तत् तस्यैव स्वरूपं वर्त्तते अर्थात् पदार्थोत्पत्तिसार्धमेवान्ते स्वकारणे लीयते। पञ्चीकृतभूतेभ्य एव नामरूपात्मक-विश्वस्य सर्जना जाता अर्थतः सर्वं तस्यैव कार्यमस्ति। पञ्चीकृतभूतमपञ्चीकृतभूतस्य कार्यमस्ति अर्थात् पञ्चीकृतभूतं स्वकारणापञ्चीकृतभूतस्यैव स्वरूपं वर्त्तते। अन्तःकरणस्य सूक्ष्मा सृष्टिरपि अपञ्चीकृतभूतानां सम्मिलितसात्त्विकगुणस्य कार्यत्वात् सत्त्वगुणस्वरूपमस्ति। सूक्ष्मभूतानां रजोगुणांशभवाः प्राणाः रजोगुणस्वरूपाः सन्ति। एवम्प्रकारेण पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि क्रमशः आकाश-वायु-अग्नि-जल-पृथिवीनामकभूतानां पृथक्-पृथक् सत्त्वरजोगुणस्य कार्यत्वात् सत्त्वगुणस्वरूपाणि एवं रजोगुणस्वरूपाणि सन्ति अन्यच्च पञ्चप्राणाः आकाश-वायु-अग्नि-जल-पृथिवीनामकभूतानां समष्टिरूपरजोगुणकार्यत्वात् रजोगुणस्वरूपा एव सन्ति। अतः सम्पूर्णा सूक्ष्मा सृष्टिः अपञ्चीकृतसूक्ष्ममूलभूतानां स्वरूपमात्रमेव।

उपर्युक्तप्रकारेण अपञ्चीकृतभूतानामपि लयः चिन्त्यते। पृथिवी जलस्य कार्यमस्ति, अतः जलस्य स्वरूपमस्ति। जलं तेजसः कार्यत्वात् तेजस्वरूपमस्ति। तेजः वायुकार्यत्वात् वायुस्वरूपमस्ति। वायुः आकाशकार्यत्वात् आकाशस्वरूपोऽस्ति। आकाशः तमोगुणप्रधानप्रकृतेः कार्यत्वात् प्रकृतिस्वरूपोऽस्ति, प्रकृतिश्च मायाकार्यत्वात् मायारूपास्ति या सम्पूर्णकार्याणि स्वात्मनि लयं कृत्वा उदासीनरूपेण तिष्ठति। माया स्वान्त्र्य रहितत्वात् चैतन्याश्रिता (ईश्वराश्रिता) भवति। शङ्कराचार्येण 'तत्त्वबोध'ग्रन्थे पञ्चीकरणप्रकरणे स्पष्टीकृतमस्ति यत् स्थूलशरीरस्याभिमानी जीवः अज्ञानकारणात् स्वयमेव ईश्वरजीवयोः भेददृष्टिं कुरुते। वस्तुतः तद् ब्रह्मणः प्रतिबिम्बं भवति। अतः अविद्यया युक्तः आत्मा जीवमायोपाध्युपहितात्मा चेश्वरः व्यपदिश्यते। एवम्प्रकारेण यावदुपाधिकारणात् जीवेश्वरयोः भेदो भवति तावज्जन्ममरणरूपसंसारस्य निवृत्तिर्न भवति।[1] पैङ्गलोपनिषदः वाक्यं तथ्यमिदं पुष्णाति यत्पारमार्थिकजीवस्योपरि अव्यक्तस्यांशरूपमज्ञानमाच्छादितमस्ति अन्यच्च तत्त्वमसीति वाक्यद्वारा ब्रह्मणः एकता प्रकटीभवति।[2] अतः जीव एवेश्वरः, ईश्वर एव जीवः, इयमभेददृष्टिः स्यात्, यस्या वर्णनं दशश्लोक्या निम्नश्लोके विहितमस्ति-

**न भूमिर्न तोयं न तेजो न वायुः नः खं नेन्द्रियं वा न तेषां समूहः।**
**अनेकान्तिकत्वात् सुषुप्त्येकसिद्धं तदेकोऽवशिष्टः शिवः केवलोऽहम्॥**[3]

---

1. स्थूलशरीराभिमानि जीवनामकं ब्रह्मप्रतिबिम्बं भवति। स एव जीव आत्मन्येव प्रकृत्या जीवेश्वरभेददृष्टिं कल्पयति। कथमिति चेत्? अविद्योपाधिः सन्नात्मा जीव इत्युच्यते तत्त्वबोधः, (उत्तरार्धे) 37
मायोपाधि सन्नात्मा ईश्वर इत्युच्यते। एवमुपाधिभेदात् जीवेश्वरभेददृष्टिः यावत्पर्यन्तं तिष्ठति तावत्पर्यन्तं जन्ममरणादिरूपो संसारं न निवर्तते। तस्मात् कारणात् जीव एव ईश्वरः, ईश्वर एव जीव इति इतराभेददृष्टिं जानीयात्। तत्त्वबोधः (उत्तरार्धे), 38
2. अव्यक्तलेशाज्ञानाच्छादितपारमार्थिकजीवस्य तत्त्वमस्यादिवाक्यानि ब्रह्मणैकतां जगुर्नेतरयो-र्व्यावहारिकप्रतिभासिकयोः। पैङ्गलोपनिषद्, 2.9
3. दशश्लोकी, 1

किन्तु पूर्णरूपेणाभेददृष्टिं ज्ञातुम् ओङ्कारस्य ब्रह्मणश्चाभेदस्वरूपज्ञानमावश्यकम्। एकमात्रं ब्रह्म एव सद्वस्तु, ततोऽन्यत्सम्पूर्णं जगत्सहितं यत्किमपि कार्यकारणरूपवस्तुजातं दृश्यते, तत्सर्वमोङ्कारस्वरूपमेव।[1] नामरूपात्मका हि पदार्थाः सर्वे। नाम रूपञ्च पृथक्-पृथक् न स्तः, अपितु नामस्वरूप एव रूपभागः अस्ति, अस्य स्पष्टं कारणमिदं यत् पदार्थस्य ग्रहणे त्यागे च प्रवृत्तौ निवृत्तौ वा नामोच्चारणं महत्त्वपूर्णम्। विना नाम व्यवहारो न सम्भविष्यति यतः आकृत्या वस्तुव्यवहारो न सम्पद्यते। नष्टायामाकृतौ नाम एव शिष्यते। उदाहरणार्थं नष्टे घटे मृत्तिका अवशिष्यते, घटस्वरूपञ्च न मृद्भिन्नम्। मृन्निर्मितेषु सर्वेषु पदार्थेषु एकैव सत्ता मृदेवानुगता भवति। एकस्याः एव मृत्तिकायाः अनेकघटेषु नामापि एकमेव भवति। अतः पदार्थानां यो रूपभागः स नामस्वरूप एव। अनया दृष्ट्यास्माभिरोङ्कारब्रह्मणोरभेदो ज्ञातव्यः। श्रुतिषु प्रणवः ओङ्कारो वा ब्रह्मवाचकोऽभिहितः। अतः ओङ्कारो ब्रह्मरूपः। ओङ्कारो ब्रह्मवाचको ब्रह्मवाच्यश्चापि। ध्यातव्यमिदं यद् ब्रह्माक्षराधिष्ठानं वर्त्तते यतोऽक्षरं ब्रह्मण्यध्यस्तम् अध्यस्त-स्वरूपञ्चाधिष्ठानादभिन्नम्। यदा साधकः समाधौ ओङ्कारस्वरूपशब्दनादे लीनो भवति, तदा स ब्रह्मस्वरूप एव भवति।[2]

आचार्यशङ्करेण 'पञ्चीकरणे' ओङ्कारस्यात्मनोऽभेदचिन्तनस्य मार्गो निर्दिष्टो यतः आत्मनो ब्रह्मणो नित्यम् अभेदः वर्त्तते। ओङ्कारस्यात्मनश्चाभेदचिन्तनं केन प्रकारेण सम्भवति? इति विचारः आवश्यकः। माण्डूक्योपनिषदि समष्टिव्यष्टिरूपस्यात्मनो जीवस्य च चतुष्पादस्य वर्णनं प्राप्यते। अभेदचिन्तनाय कासुचित्समानतासु ध्यानमपेक्षितम्- विराट्, हिरण्यगर्भः, ईश्वरः साक्षी च चत्वाराः पादाः ब्रह्मणः सन्ति ये तत्त्वमसीति-महावाक्यस्य तत्पदवाच्याः, तथा च विश्वः, तैजस्, प्राज्ञः साक्षी च चत्वारः पादाः आत्मनः सन्ति, ये तत्त्वमसीति महावाक्यस्य त्वम्पदवाच्याः। जीवस्साक्षिणस्तुरीयसंज्ञा भवति। समष्टिरूपस्थूलप्रपञ्चस्याभिमानिचैतन्यं 'विराट्' व्यष्टिरूपस्थूलाभिमानिचैतन्यञ्च 'विश्वः' इति व्यपदिश्यते। विश्वविराजोः स्थूलोपाधेर्विराडेव विश्वः। अस्य विराड्विश्वस्य सप्ताङ्गानि ऊनविंशमुखानि च कथितानि येषां कारणादयं जाग्रदवस्थायामिन्द्रियैर्बाह्य-विषयानुपभुङ्क्ते। द्युलोकसूर्यवाय्वाकाशान्नपृथिव्याह्वनीयाग्न्यः क्रमेण शिरःनेत्रमध्यस्थानदेहजल-पादमुखरूपे कल्पितानि सप्ताङ्गानि तथा पञ्चप्राणाः, पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि चतस्रश्चान्तःकरणवृत्तयः ऊनविंशमुखानि। एतेषु अन्तःकरणानीन्द्रियाणि च स्व-स्वदेवतानु-ग्रहेण जाग्रदवस्थायाः विषयान् भुञ्जते। एतैः प्रमुखैश्चतुर्दशकरणैर्देवतानुग्रहं विषयञ्च विना भोगानां भोगो न सम्भवः।[3] इन्द्रियाणाम्, इन्द्रियदेवतानां विषयाणाञ्चाधारेण

1. ओमित्येतदक्षरमिदं सर्वं तस्योपाख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव। मुण्डकोपनिषद्, 1
2. यस्मिन् स लीयते ब्रह्म शब्दस्तत्परं ब्रह्म गीयते। सोऽमृतत्त्वाय कल्पते सोऽमृतत्त्वाय कल्पते॥, प्रणवोपनिषद् 13
3. इन्द्रियैरर्थविज्ञानं देवतानुग्रहान्वितैः। शब्दादिविषयं ज्ञानं तज्जागरितमुच्यते। बाह्यान्तःकरणैरेवं देवतानुग्रहान्वितैः। स्वं स्वं च विषयज्ञानं तज्जागरितमुच्यते।। पञ्चीकरणम् (वार्तिकम् 13, 29), पृष्ठसङ्ख्या 73, 85

सुरेश्वराचार्येण अध्यात्माधिदैविकाधिभूतस्तरेषु त्रिपुट्याः स्वरूपं निरूपितम्–[1]

**त्रिपुटीस्वरूपस्य तालिका**

| इन्द्रियाणि/अध्यात्मम् | विषयः/अधिभूतम् | देवता/अधिदैवतम् |
|---|---|---|
| श्रोत्रम् | श्रोतव्यः शब्दः | दिशः |
| त्वक् | स्प्रष्टव्यः स्पर्शः | वायुः |
| चक्षुः | द्रष्टव्यं रूपम् | आदित्यः |
| जिह्वा | स्वाद्यो रसः | वरूणः |
| नासिका | घ्रातव्यो गन्धः | अश्विनीकुमारौ |
| वाणी | वक्तव्यः शब्दः | अग्निः |
| हस्तौ | आदातव्यः | इन्द्रः |
| पादौ | गन्तव्यः | विष्णुः |
| पायुः | विसर्गः | मृत्युः |
| उपस्थः | आनन्दः | प्रजापतिः |
| मनः | मन्तव्यो विचारः | चन्द्रः |
| बुद्धिः | बोद्धव्यः | बृहस्पतिः |
| अहङ्कारः | अहंकर्तव्यः | रूद्रः |
| चित्तम् | चेतव्यः (चिंतनं कर्त्तुम्) | हरिः |
| अज्ञानम् (तमः) | कामादि–विकारः | ईश्वरः |

त्रिपुट्याः स्वरूपस्य विवेचनकारणत्वात् सर्वेषां मध्ये पारस्परिकी एकता अवगम्या। आहत्य चतुर्दश त्रिपुट्यः पञ्चप्राणाः विराट्रूपविश्वस्य ऊनविंशमुखानि सन्ति, अतः विराड् विश्वादभिद्यते। यथा विराड् विश्वादभेदो वर्तते तथैव ओङ्कारस्य प्रथममात्रायाः अकारस्य विराड्रूपविश्वाद् अभेदो वर्त्तते। यतः ब्रह्मणः चतुर्षु पादेषु प्रथमः पादः विराट् अस्ति, आत्मनश्च चतुर्षु पादेषु प्रथमपादः विश्वोऽस्ति। ध्यातव्यमस्ति यत्त्रिष्वपि 'प्रथमत्वस्य' धर्मसाम्यं वर्त्तते। अनया दृष्ट्या विश्व–विराट्–अकारेषु अभेदचिन्तनं करणीयम्। सुरेश्वराचार्येण वार्तिके उक्तभावः प्रदर्शितः यत् जाग्रदवस्था इन्द्रियाणाञ्च

1. पञ्चीकरणम् (वार्तिकम् 14–28), पृष्ठसङ्ख्या 77–85

आश्रयः शरीरमस्ति एवञ्चैतयोरभिमानी विश्वात्माऽस्ति।[1] अस्यामवस्थायां जीवात्मनः प्रज्ञा सप्ताङ्गैः एकोनविंशतिमुखैः स्थूलजगतः विषयान् गृह्णाति, तेनैव प्रकारेण ईश्वरस्य सर्वशक्तिमत्वसर्वव्यापकत्वकारणात् ब्रह्माण्डे सम्पूर्णकार्यमनवरतं चलति या च जाग्रदवस्था भवति। अत एव भेदस्य दूरीकरणाय विश्वात्मा विराट्रूपेणाभिन्नः दृश्येत।[2]

स्वप्नावस्थायामिन्द्रियव्यापारनिरुद्धत्वात् जीवात्मनः प्रज्ञा अभ्यन्तर एव कार्यं कुरुते। जाग्रदवस्थायाश्च विषयसंस्कारैः स्थितस्यान्तःकरणस्य वासनानुरूपं तैजस्स्वयमेव विषयानुपभुङ्क्ते। अतः तैजसः त्रिपुट्यास्स्वरूपमङ्गश्च मनोमयौ स्तः। ईश्वरस्य स्वप्नावस्थाऽपि सूक्ष्मभूतेषु व्याप्य स्वनैसर्गिकज्ञानेन कर्मणा च विषयान् स्थूलजगद्रूपेण परिवर्त्तयति, येन जीवात्मा सप्ताङ्गैरूनविंशमुखैश्चैव भोगान् भुङ्क्ते। अत एवोपनिषत्सु तैजस् अन्तःप्रज्ञः प्रविविक्तभुक् चेति व्यपदिश्यते।[3]

तैजसः जाग्रदवस्थायां बाह्यविषयाणां भोगजाः सुखदुःखाः स्थूलाः स्वप्नावस्थायाञ्च भोग्या भोगाः सूक्ष्मा इत्युच्यन्ते। विराट्-विश्वाविव तैजसः विषये एतज्ज्ञेयं यत् तैजस् हिरण्यगर्भस्यैव स्वरूपमस्ति यतः हिरण्यगर्भ-तेजसोरुभयोरपि सूक्ष्मोपाधिरस्ति तथा च ब्रह्मणः चतुर्षु पादेषु द्वितीयपादः हिरण्यगर्भः आत्मनश्च द्वितीयपादः तैजस् अस्ति एवञ्च ओङ्कारस्य मात्रासु द्वितीया मात्रा उकारोऽस्ति। अत्र त्रिष्वपि धर्मसाम्यः 'द्वितीयभावः' अस्ति। एतेनाधारेण हिरण्यगर्भ-तैजस्-उकाराणां विभेदचिन्तनं भेदनिवृत्तये करणीयम्। इदं प्रत्यगात्मनः मायिकं सूक्ष्मशरीरं भवति यस्मिन् लीनेष्विन्द्रियेषु जाग्रतावस्थायामनुभूत-संस्कारैः विषयप्रतीतिर्भवति।[4]

प्राज्ञेश्वरस्योपाधिः कारणशरीरमस्ति चतुर्विधेषु च पादेषु उभयोरपि सङ्ख्या तृतीया वर्त्तते। ओङ्कारस्य तृतीया मात्रा मकारोऽस्ति। अत्र त्रिष्वपि समानधर्मः तृतीयत्वमस्ति। अतः त्रयाणामप्येकत्वमवगच्छन् ईश्वर-प्राज्ञ-मकाराणामभेदचिन्तनं समपेक्षितम्। विदितमिदं यत् सुषुप्तौ पूर्णतः अविद्यारूपे सञ्जाते प्राज्ञः प्रज्ञानघनः (प्र+अज्ञः) इत्युच्यते यतोहि

---

1. येयं जागरितावस्था शरीरं करणाश्रयम्।
   यस्तयोरभिमानी स्याद्विश्व इत्यभिधीयते।। पञ्चीकरणम् (वार्तिकम् 30), पृष्ठसङ्ख्या 89। विश्वं वैराजरूपेण पश्येद् भेदनिवृत्तये। पञ्चीकरणम् (वार्तिकम् 31), पृष्ठसङ्ख्या 90
2. जागरितस्थानो बहिःप्रज्ञः सप्ताङ्गएकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः। माण्डूक्योपनिषद्, 3
3. स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग-एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः। माण्डूक्योपनिषद्, 4
4. एतत्सूक्ष्मशरीरं स्यान्मायिकं प्रत्यगात्मनः। करणोपरमे जाग्रत्संस्कारोत्थप्रबोधवत्।।
   ग्राह्यग्राहकरूपेण स्फुरणं स्वप्न उच्यते। अभिमानी तयोर्यस्तु तैजसः परिकीर्तितः।।
   हिरण्यगर्भरूपेण तैजसं चिन्तयेद् बुधः। पञ्चीकरणम् (वार्तिकम् 36-38), पृष्ठसङ्ख्या 96-104

चित्तस्यैकाग्रता एव सुषुप्त्यवस्था भवति। सकलप्रपञ्चस्य भानरहितत्वादज्ञाने प्रवेशकारणात् प्राज्ञः आनन्दं भुङ्क्ते, अत एवायम् आनन्दभुगपि कथ्यते।[1]

विश्वतैजसोरिव प्राज्ञस्य भोगस्यापि त्रिपुटी भवति। अत्र चैतन्यप्रतिबिम्बसहिताज्ञानस्य वृत्तिरध्यात्मम्, अज्ञानावृतस्वरूपानन्दोऽधिभूतम् ईश्वरश्चाधिदैवं भवति। एषा सुषुप्त्यवस्था भवति यत्र एकमात्रचैतन्यं भासते जीवश्च निद्रातो जागरणोपरान्तमेतावदेवानुभवति यत् सुखमहमस्वाप्सम्। अस्मात् सुस्पष्टमिदं यत् किञ्चिदपि स्मरणं न स्थितेरानन्दानुभूतिर्भवति।[2] ईश्वरः स्वसुषुप्त्यवस्थायां स्थूलसूक्ष्मभूतदृष्ट्या अव्यक्तो भूत्वा कारणरूपप्रकृत्यै शक्तिं प्रयच्छन् सच्चिदानन्दस्वरूपेऽवस्थितो भवति।

उपर्युक्तविवेचितविषये दृष्टिपातेन ज्ञायते यत्त्रिष्वपि भेदकारणमुपाधिः वर्त्तते। स्वभावतः इदमेकमेव तत्त्वं यतः विश्वतैजसप्राज्ञेषु त्रिष्वपि स्थितमेकमेव चैतन्यं भासते। विश्वस्य स्थूलसूक्ष्माज्ञानानि उपाधिभूतानि तैजसः सूक्ष्मज्ञानञ्चोपाधिः प्राज्ञस्य चैकमात्रमज्ञानमुपाधिः। एतेषु त्रिषु सूत्ररूपेण स्थितस्तु शाश्वतरूपेण त्रिभ्य उपाधिभ्यो रहितः अस्ति। एषां त्रिविधोपाधीनामधिष्ठानं तुरीयमेव।

जीवात्मब्रह्मणोश्चतुर्थपादस्तुरीयः वर्त्तते, यः त्रिविधशरीरेभ्यो रहितत्वात् कर्मेन्द्रियाणां ज्ञानेन्द्रियाणाञ्च विषयो न भवति। बुद्धिरपि एनं विषयत्वेन न गृह्णाति, अत एव कस्यापि शब्दस्य अविषयीभूतत्वादिदमात्मनः शुद्ध स्वरूपम्। अत्र सकलप्रपञ्चस्योपशमत्वाद् अवस्थेयं शान्त-शिवाद्वैतरूपेणाभ्यधीयत।[3] ओङ्कारस्य अकारोकारमकाररूपवर्णानां समूहः तस्यापरमार्थरूपमभिधीयते तथा च तिसृषु मात्रासु व्यापकम् अस्ति-भाति-प्रियरूपेणाधिष्ठान-रूपचेतनमस्ति, तत् परमार्थरूपमभिधीयते। माण्डूक्योपनिषदि ओङ्कारस्य परमार्थरूपम् 'अमात्रम्' उच्यते। अमात्रस्याशयो विभागराहित्यम्। पारमार्थिकरूपेण सर्वम् ओङ्कारस्वरूपमेव। उपाधिकारणादेव भेदो दृश्यते। भेदोऽयं व्यष्टिसमष्टिरूपेण ज्ञायते।

## ओङ्कारात्मनोरभेदचिन्तनम्

ओङ्कारस्यात्मनश्चाभेदचिन्तनं कथं भवेदित्यस्य विवेचनं सुरेश्वराचार्येण विहितम्।[4]

---

1. यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः। माण्डूक्योपनिषद्, 5
2. ज्ञानानामुपसंहारो बुद्धेः कारणतास्थितिः। वटबीजे वटस्येव सुषुप्तिरभिधीयते।।
   अभिमानी तयोर्यस्तु प्राज्ञ इत्यभिधीयते। जगत्कारणरूपेण प्राज्ञात्मानं विचिन्तयेत्॥ पञ्चीकरणम् (वार्तिकम् 42-43), पृष्ठसङ्ख्या 126-143
3. नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्, अदृष्टमव्यवहार्य्यमग्राह्यम-लक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारम् प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः। माण्डूक्योपनिषद्, 7
4. विश्वतैजससौषुप्तविराट्सूत्राक्षरात्मभिः।
   विभिन्नमिव सम्मोहादेकतत्त्वं चिदात्मकम्॥ पञ्चीकरणम् (वार्तिकम् 44), पृष्ठसङ्ख्या 132

व्यष्टिरूपस्थूलशरीरस्याभिमानी आत्मा 'विश्व:', व्यष्टिरूपसूक्ष्मशरीरस्याभिमानी आत्मा 'तैजस्', व्यष्टिरूपकारणशरीरस्याभिमानी आत्मा 'प्राज्ञ:', समष्टिरूपस्थूलब्रह्माण्डस्याभिमानी आत्मा 'विराट्', समष्टिरूपसूक्ष्मब्रह्माण्डस्याभिमानी आत्मा 'सूत्रात्मा (हिरण्यगर्भ:)' तथा च समष्टिकारणरूपमायाया: अभिमानी आत्मा 'ईश्वर:' इत्यादिरूपेण एकमेव चैतन्यतत्त्वं भ्रमवशात् पृथक्-पृथग्रूपेण भासते। अत: सुवर्णनिर्मिताभूषणेषु एकतत्त्वसुवर्णस्य सत्ताया: ज्ञानसदृशभेदनिवृत्त्यै सर्वविधात्मन: एकरूपेण द्रष्टव्या:। एतान् सर्वान् एकरूपेण दर्शनाय लयचिन्तनमावश्यकम्।

सर्वप्रथमं तु आत्मन: पादानां ओङ्कारस्य मात्राणाम् अभेदचिन्तनाय व्यष्टित: समष्टिं प्रति गन्तव्यं यथा विश्व: विराट् च, हिरण्यगर्भ: तैजश्च ईश्वर: प्राज्ञश्च एके एव वर्तन्ते। अत: व्यष्टिसमष्टिस्थूलप्रपञ्चयुतौ विश्वविराजौ अकारेण, हिरण्यगर्भस्य तैजसश्च उकारेण अथ च ईश्वरस्य प्राज्ञस्य च मकारेण अभेदचिन्तनं विधातव्यम्। एतस्मिन्नेव क्रमे एतासु तिसृष्ववस्थासु एकमेव तत्त्वं मात्रात्रयेषु निष्ठपरमार्थरूपतया अमात्रत: अभिन्नम् अवगच्छेत्। यथा विश्वाद्युपाधिषु तुरीय: तिष्ठति तद्वत् अकारोकारमकारमात्रासु अमात्रं तिष्ठति। अत एव ओङ्कारस्य अमात्रतुरीययो: एकत्वं बोधव्यम्। ओङ्कारस्य अमात्रस्वरूपे विज्ञाते सति जीवात्मन: परमात्मना सह साक्षात्कार: भवति। अत: आत्मन: पादानाम् ओङ्कारस्य च मात्राणाम् एव क्रम: लयचिन्तनत्वेन प्रोच्यते। यतोहि वाच्याद् वाचकस्य भेद: नोपलभ्यते।[1]

साम्प्रतं प्रश्न: क्रियते एतत् लयचिन्तनं कदा कस्यां च स्थितौ करणीयम्? चेत् एतस्य समाधानं वर्तते यत् समाधिकाले अत्यन्तप्रयत्नेन चिन्तनं विधाय स्थूलप्रपञ्चत: द्वैतप्रपञ्चं शुद्धचिदात्मनि विलयं नयेत्। सुरेश्वराचार्य: लयस्य क्रमं स्पष्टं चकार यत् स्थूलप्रपञ्चेन सह विश्वात्मरूपाकारस्य तैजोरूपोकारे लय: कर्त्तव्य:, यतोहि स: अकाररूप एव वर्तते। एवम्प्रकारेण स्थूलप्रपञ्चेन सह तैजसात्मरूपोकार: प्राज्ञरूपमकारे लयो नेतव्य:। अथ च कारणाज्ञानोपाधिना सह मकारम् ओङ्कारस्य तुरीयशुद्धस्वरूपमात्रे विलयं नयेत्। लयस्य एष: क्रम: अत: वर्तते यतोहि स्थूलप्रपञ्चस्य लयोत्पत्ती सूक्ष्मे भवत:, सूक्ष्मस्य च लयोत्पत्ती कारणे भवत:। तुरीयमेव ब्रह्मण: स्वरूपमस्ति। ओङ्कारस्य च अमात्रस्य (परमार्थस्य) तुरीयेणाभेद: वर्त्तते[2]। अत: समाधे: स्थितौ ओङ्कारस्य तात्त्विकस्वरूपामात्रस्य 'ब्रह्मैवाहमस्मि' इत्येतस्मिन् एकाग्रचित्तो भूत्वा चिन्तनं कुर्वन् लयं कुर्यात् अथ च तेनैव सह विवेकयुक्तो शीघ्रमेव ज्ञानोदयाय एषा भावना कर्त्तव्या यत् अहम् आत्मा चिन्मात्रस्वरूप:, निर्लिप्त:, शुद्ध:, प्रबुद्ध:, नित्यमुक्त:, अभयस्सत्य-द

1. ॐकारमात्रमखिलं विश्वप्राज्ञादिलक्षणम्।
वाच्यवाचकताऽभेदाद्भेदेनानुपलब्धित:।। पञ्चीकरणम् (वार्तिकम् 46), पृष्ठसङ्ख्या 134
2. अकारं पुरुषं विश्वमुकारे प्रविलापयेत्।
उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत्।। पञ्चीकरणम् (वार्तिकम्. 49), पृष्ठसङ्ख्या 137

स्वरूपश्चास्मि।[1] एवम्प्रकारेण अभेदभावनया चिन्तनं कुर्वन् स्थिरतायां सति समाधिः सिद्धो भवति।[2]

पञ्चीकरणोङ्कारस्य लयचिन्तनस्य क्रमं ज्ञात्वा इदं ज्ञायते यत् प्रत्येकस्मिन् वस्तुनि स्थूलात् सूक्ष्मम्, कार्यात् कारणं प्रति, बाह्यात् आभ्यन्तरं प्रति गमनस्य सहजा प्रवृत्तिर्भवति। उपनिषत्सु निर्दिष्टं यत् मनुष्यः आत्मस्थो भूत्वैव ब्रह्मणः साक्षात्काराय प्रभवति। अतः पञ्चीकरणलयचिन्तनद्वारा ब्रह्म प्रति गमनस्य एषैव क्रमोऽस्ति। आत्मा शरीरस्थो वर्त्तते, आत्मस्थभवनप्रक्रियैव च तुरीयावस्था। अतः उपनिषद्यपि जाग्रतः स्वप्नावस्था, स्वप्नावस्थायाः सुषुप्तिः, सुषुप्त्यावस्थायाः तुरीयं प्रति लयचिन्तनस्य क्रमः प्राप्यते। आचार्यशङ्करेण ओङ्कारमात्राणां लयचिन्तनस्य क्रमं दर्शयित्वा समाधेः स्वरूपं निरूपयता लययोगः प्रतिपादितः–

**"अकार उकारे, उकारो मकारे, मकार ॐकारे, ॐकारोऽहम्येव। अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपः, नाज्ञानं, नापि तत्कार्यं, किन्तु नित्यशुद्धबुद्धमुक्त-सत्यस्वभावं परमानन्दद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मैवाहमस्मीत्यभेदेनावस्थानं समाधिः। "तत्त्वमसि" "ब्रह्माहमस्मि" "प्रज्ञानमानन्दं ब्रह्म" "अयमात्मा ब्रह्म" इत्यादि श्रुतिभ्यः। इति पञ्चीकरणं भवति।"[3]**

अर्थात् लयचिन्तनस्य क्रमे अकार उकारे, उकारो मकारे, मकार ओङ्कारे तथा ओङ्कार 'अहम्' इत्यस्मिन् लीनो भवति। अतः अहमात्मा साक्षी ब्रह्मस्वरूप एवास्मि। नाहमज्ञानमस्मि नैवाज्ञानस्य कार्यं देहादिमिथ्याप्रपञ्चोऽस्मि, किन्तु नित्यशुद्धबुद्धमुक्त-सत्यस्वभावं परमानन्दद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मैवाहमस्मीत्यभेदेनावस्थानं समाधिः। अयमेव लयचिन्तनस्य क्रमोऽस्ति। ओङ्कारस्याकारस्य उकारे, उकारस्य मकारे अन्यच्च मकारस्य 'अहं ब्रह्मास्मि' इत्यस्मिन् लयस्य कारणमिदमस्ति ब्रह्मैव परं सत्यमस्ति जीवनस्य च परमलक्ष्यमस्ति। तत्त्वमसीत्यादिवेदान्तमहावाक्यं तु अज्ञाननिवृत्तेर्जीवब्रह्मणोरैक्यस्य च माध्यमं वर्त्तते किन्तु ओङ्कारः समाधौ चित्तस्थैर्यसाधनेन सह सम्पूर्णब्रह्माण्डस्य एकमात्रकारणं वर्त्तते। 'ओ३म्' इत्यस्यार्थे विचारिते प्रत्यक्पदार्थप्रभृत्यखिलब्रह्माण्डपर्यन्तपदार्थस्य ऐक्यभानं भवति तथा च साधकस्य जीवनमुक्तिर्निश्चिता भवति। लययोगप्रतिपादकं श्रुतिप्रमाणमिदम्–

---

1. मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत्। पञ्चीकरणम् (वार्तिकम् 50), पृष्ठसङ्ख्या 137
अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपः नाज्ञानं नापि तत्कार्यं किन्तु नित्यशुद्धबुद्धमुक्तसत्यस्वभावं परमानन्दाद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मैवाहमस्मि। पञ्चीकरणम्, पृष्ठसङ्ख्या 4-5
2. जीवात्मनः परस्यापि यद्येवमुभयोरपि। अहमेव परं ब्रह्म ब्रह्माहमिति संस्थितिः।।
समाधिः स तु विज्ञेयः सर्ववृत्तिविवर्जितः। ब्रह्म संपद्यते योगी न भूयः संसृतिं व्रजेत् त्रिशिखिब्राह्मणोपनिषद्, 161-162
3. पञ्चीकरणम्, पृष्ठसङ्ख्या 3-4

**"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभि-संविशन्ति, तद्विजिज्ञास्व, तद्ब्रह्मेति।"[1]**

निष्कर्षरूपेणात्रेदं वक्तुं शक्यते यत् पञ्चीकरणद्वारा आत्मानुसन्धानस्यैकोऽन्यतमो मार्गो निर्दिष्टो यत्राध्यारोपपवादन्यायेन तत्त्वनिश्चयः क्रियते। पञ्चीकरणमिदं पूर्णतो लययोगप्रतिपादकं वर्त्तते यत्र पञ्चभूततत्त्वानि केन्द्रे संस्थाप्य सम्पूर्णजगतो ब्रह्मरूपता सूत्रतो निरूपिता वर्त्तते।

**सन्दर्भग्रन्थसूचिः**


1. *श्रीमद्भगवद्गीता (शाङ्करभाष्यसमेता)*, दिल्ली : मोतीलालबनारसीदासः, 2014.
2. *छान्दोग्योपनिषद् (सानुवाद शाङ्करभाष्यसहिता)*, गोरखपुरम्, गीताप्रेस-गोरखपुरम्, सं. 2013.
3. *तैत्तिरीयोपनिषद् (सानुवाद शाङ्करभाष्यसहिता)*, गोरखपुरम्, गीताप्रेस-गोरखपुरम्, सं. 1993.
4. *माण्डूक्योपनिषद् (गौडपादीयकारिका, शाङ्करभाष्य एवं हिन्दी अनुवादसहिता)*, गोरखपुरम्, गीताप्रेस-गोरखपुरम्, सं. 2069
5. *108 उपनिषद् (भाग-1, ब्रह्मविद्या-खण्डः, सरल-हिन्दी-भावार्थ-सहिता)*, सम्पादकः- पं. श्रीरामशर्मा-आचार्य, मथुरा : युगनिर्माणयोजना, 2005.
6. *.................... (भाग-2 ज्ञान खण्डः, सरल-हिन्दी-भावार्थ-सहित)*, सम्पादकः- पं. श्रीरामशर्मा-आचार्य, मथुरा : युगनिर्माणयोजना, 2005.
7. *पञ्चीकरणम् (हिन्दीभाषानुवादयुक्तषट्टीकोपेतम्)*, भाष्यकारः- डॉ. कामेश्वरनाथ-मिश्रः, चौखम्भा-संस्कृत-संस्थानम्, वाराणसी प्रथमसंस्करणम्, 1983.
8. *पातञ्जलयोगदर्शनम् (व्यासभाष्य-संवलितम् तच्च योगसिद्धि-हिन्दीव्याख्योपेतम्)*, व्याख्याकारः- सुरेशचन्द्रश्रीवास्तवः, चौखम्बा-सुरभारती-प्रकाशन, वाराणसी 2012.
9. वेदान्तसङ्ग्रहः, लेखकः- रामरायकविः, सम्पादकः- आर. बालसुब्रह्मण्यम् एवं एस. रेवाठी, चिन्मय-इन्टरनेशनल-फाउन्डेशन-शोधसंस्थानम्, केरल द्वितीय-संस्करणम्, 2014.
10. *वेदान्तसारः*, व्याख्याकारः- पं. रामस्वरूपः, खेमराज-श्रीकृष्णदासः, श्रीवेङ्कटेश्वर-मुद्रणालयः, मुम्बई, 1950.




---

1. तैत्तिरीयोपनिषद्, 3.1.1